माणिकचंद–दिगंबरजैन–ग्रन्थमाला, अष्टम पुष्प।

श्रीमन्महासेनाचार्यविरचितं

# प्रद्युम्नचरितम्



पाढमनिवासि-पण्डितमनोहरलालशास्त्रिणा

जटौआनिवासि पं०रामप्रसादशास्त्रिणा च

सम्पादितं संशोधितं च ।

---

प्रकाशिका—

माणिकचंद-दिगम्बरजैन-ग्रन्थमालासमितिः।

---

चैत्र, वीरनिर्वाण सं० २४४३

---

विक्रमाब्दम् १९७३

## कृतज्ञता-प्रकाश ।

इस ग्रन्थकी एक प्रति जो बहुत ही शुद्ध सटिप्पण और विक्रम संवत् १६७८ की लिखी हुई है हमें श्रीयुत पण्डित उदयलालजी काशलीवालसे प्राप्त हुई है और जो उन्हें नागौरके सुप्रसिद्ध पुस्तकभण्डारसे जिसके कि अधिकारी श्रीमद्भट्टारक हर्षकीर्तिजी महोदय हैं—मिली थी। दूसरी प्रति जयपुर निवासी श्रीयुत पं० इन्द्रलालजी साहित्यशास्त्री द्वारा प्राप्त हुई है जो प्रायः शुद्ध है। केवल इन्हीं दो प्रतियोंसे इस ग्रन्थका सम्पादन और संशोधन हुआ है। अतएव दोनों महाशयोंके हम बहुत ही कृतज्ञ हैं ।

—प्रकाशक ।

श्रीपरमात्मने नमः

श्रीमन्महसेनाचार्यविरचितं

# प्रद्युम्नचरितम् ।



## प्रथमः सर्गः ।

श्रीमंतमानम्य जिनेंद्रनेमिं
ध्यानाग्निदग्धाखिलघातिकक्षम्[1] ।
व्यापारयामास[2] न यत्र बाणान्
जगद्विजेता मकरध्वजोपि ॥ १ ॥

बाल्येपि यस्याप्रतिमं[3] सुरेन्द्रो
विलोक्य रूपं पुनरीक्षतेस्म ।
चक्षुःसहस्रं युगपद्विधाय
नत्वा च तं वीरजिनं विरागम् ॥ २ ॥

जिनेंद्रवक्त्राम्बुजराजहंसीं
प्रणम्य शुक्लामथ भारतीं च ।
उपेन्द्रसूनोश्चरितं[4] प्रवक्ष्ये
यथागमं पावनमात्मशक्त्या ॥ ३ ॥

१ तृणसमूहं । २ मुमोच । ३ असदृश । ४ कृष्णपुत्रस्य प्रद्युम्नस्य ।

कवीन्द्रसीमा[1]नमितैर्यदुक्तं
गणेश्वराद्यैरपि विस्तरेण ।
तत्पादपद्मद्वयभक्तिशक्त्या
संक्षिप्य तद्वक्तुमयं श्रमो नः ॥ ४ ॥

द्वीपोथ जंबूपपदोस्ति मध्ये
द्वीपांतराणामिव पार्थिवानाम् ।
यो वा[2]हिनीनाथवृतः सुवृत्तो
नित्यं जिगी[3]षुप्रतिमश्चकास्ति ॥ ५ ॥

तत्रास्ति वास्यं दिशि दक्षिणस्यां
तद्भारतं नाम चिरप्रसिद्धम् ।
तीर्थंकृतं तीर्थकृतां पवित्रं
गर्भादिकल्याणपरंपराभिः ॥ ६ ॥

तीर्थैरनेकैर्जिनपुंगवानां
पुण्योस्ति तस्मिन् विषयः सुराष्ट्रः ।
स्वर्गैकदेशः पतितः पृथिव्यां
यद्वन्निरालंबतया विभाति ॥ ७ ॥

सहस्रसंख्यैः सितरक्तनीलैः
सरांसि यस्मिञ्जलजैर्विरेजुः ।
कुतूहलेनेव यदीयलक्ष्मीं
द्रष्टुं समेतैः सुरराजनेत्रैः ॥ ८ ॥

चकाशिरे यत्र नदीनितंबा
भुक्तोज्झिता भोगिगणैरसंख्यैः ।
स्वस्थांवराः कामकृतो विशालाः ।
पण्यांगनानां जघनैः समानाः ॥ ९ ॥

---

१ मर्यादां प्राप्तैः । २ समुद्रः पक्षे सेनापतिश्च । ३ चक्रवर्तिसदृशः । ४ शोभं

फलावनम्राः सरसाः कुलीनाः
प्रसूनगंधैः सुरभीकृताशाः ।
वनश्रियो यत्र मुदे जनानां
पौरांगनाश्चाप्रमिता विभांति ॥ १० ॥

यत्रेक्षुवाटा गुरवोपि भूमौ
नायांति वाताहतिकंपमानाः ।
संलब्धमूलाः सरसा नितांतं
वधाद्विभीता इव पामराणाम् ॥ ११ ॥

नम्रैः फलैः स्वामिमनोरथैर्वा
वप्रेषु शीतं परिपाकपिंगाः ।
इंदीवरैर्वासितमंबु यत्र
श्रीशालयः पातुमिवानमंति ॥ १२ ॥

भ्रांत्या पयोधेः सरसीं विगाह्य
पांथः पयोदाः परितः पिबंतः ।
पानीयजन्मद्विपयूथशंकां
यत्रातपांते दधते जनानाम् ॥ १३ ॥

यत्राचकाद्गोचरभूर्वनांते
नवोलपा शाड्वलकांतिकांता ।
गौमंडलैर्मंडितमध्यदेशा
तारागणैर्द्यौरिव सौम्यभावा ॥ १४ ॥

स्निग्धैः कुलीनैः फलितैर्विनम्रैः
छेदे विमर्देपि फलापहारे ।
यत्राभवन्नैव वियोगभावो
लोकस्य धान्यैः पदिकैरिनानाम् ॥ १५ ॥

तुंगेषु मध्ये नृपवल्लभेषु
भद्रासयोच्चैकुल संभवेषु ।

स्तंबेरमा एव कपोलपालीं
 भृंगावलीलीढमदं वहंति ॥ १६ ॥
निसर्गलावण्यमये कपोले
 भानोः करा एव न पार्थिवानाम् ।
स्वेदं वधूनां जनयंति यत्र
 मुक्तावलीसन्निभसन्निवेशम् ॥ १७ ॥
मातंगसंगेपि कृते पवित्रा
 वक्रत्वभाजोपि निसर्गसत्यः ।
सेव्या द्विजौघैरतिशुद्धपक्षै—
 स्तथाप्यगम्याः सरितो विभांति ॥ १८ ॥
सीमंतिनीकांतकपोलकांति—
 लावण्यसद्वृत्तपराजयेन ।
अद्यापि धत्ते मलिनत्वमंत—
 श्चंद्रः समुद्भूतह्रियेव यत्र ॥ १९ ॥
यत्र प्रदेशाः सुरसुंदरीणां
 चेतांसि रम्या रमयांबभूवुः ।
मनोज्ञरूपा गुणिनां मनांसि
 कुर्वंति वश्यानि किमत्र चित्रम् ॥ २० ॥
मित्रं समो हारि यशो विभूषा
 त्यागो विनोदः करुणा कलत्रम् ।
शास्त्रं गुरुर्बंधुजनोपि धैर्यं
 धर्मो धनं यत्र सदा जनानाम् ॥ २१ ॥
तत्रास्ति चामीकरचारुहर्म्या
 श्रीसंगता स्वर्णगरीव रम्या ।
हरेः पदं द्वारवतीति नाम्ना
 पुरी परीता निमिपालयेन ॥ २२ ॥

कल्लोलहस्तैस्तरलैर्यदीयं
नितंवमास्फाल्य विकंपमानः ।
पलायते दूरतरं पयोधिः
परांगनासंगभयेन नूनम् ॥ २३ ॥

यदीयरूपातिशयं निरूप्य
लोलः समीपं रसवत्तयाप्य ।
कठोरभावात् प्रतिषिद्धसंगो
निवर्तते व्रीडितयेव सिंधुः ॥ २४ ॥

नवैर्नवैः प्राभृतकैः समेत्य
महोर्मिहस्तैः कृतरत्नराशिः ।
गंभीरनादं निनदन्निवाब्धि—
र्यदीयसेवाभिरतो विरेजे ॥ २५ ॥

यदीयवास्तव्यकरैरनेकै—
र्मुक्तादिरिक्तीकृतमध्यदेशः ।
ध्वनिच्छलेनोर्ध्वतरंगहस्तः
शालाद्बहिः पूत्कुरुते पयोधिः ॥ २६ ॥

लावण्यरूपादिगुणातिरेकं
यत्सुंदरीणामवलोक्य मन्ये ।
अद्यापि तद्विस्मयतः सुराणां
चलापि दृग् निश्चलतामवाप ॥ २७ ॥

चैत्यालया यत्र समाह्वयंति
दूरादिवोच्चैः कृततूर्यनादाः ।
भव्यान् पताकाकरपल्लवेन
जिनेन्द्रपूजार्थमितस्ततोपि ॥ २८ ॥

नीलाश्मनिर्माणनिशांतमालां
विंध्यायमानां पुरतो विलोक्य ।

यस्याः पतंगः स्खलदश्वमुच्चै—
मंदं रथं भंगभयेन निन्ये ॥ २९ ॥

चंद्रस्य कांतिर्विजितेव यत्र
नैर्मल्यलावण्यमयैः कपोलैः ।
रेजे नखांशुच्छलतोबलानां
पादारविंदे पतिता मनोज्ञे ॥ ३० ॥

यत्र प्रदोषे तरुणीकपोल—
ज्योत्स्नाप्रकाशेन कृतावभासे ।
ग्राह्ये पदार्थे भवनेषु दीपा
लोकैः प्रबोध्या गृहमंगलार्थम् ॥ ३१ ॥

क्रय्या वणिग्भिर्बहुरत्नपुंजा
ऊर्ध्वं प्रयातैः किरणैर्विचित्रैः ।
तेनुः सदाखंडलचापमालां
यत्राट्टमार्गे कृतहट्टशोभाम् ॥ ३२ ॥

यस्यां निशीथे पुरसुंदरीणां
कृष्णेपि पक्षे नखचंद्ररोचिः ।
मार्गे प्रकाशं विदधाति दूरं
संप्रस्थितानां प्रियवासगेहम् ॥ ३३ ॥

नक्षत्रमालापरिभूषिताया
नीलांबरासंगविराजितायाः ।
यत्र प्रतोल्याः शिरसि स्थितः स
चूडामणित्वं विदधाति चंद्रः ॥ ३४ ॥

यत्र प्रतोलीजनताप्रवेश—
निष्कासंबाधनिपीडितोपि ।
लोको न दोषं मनुते निमग्नो
लीलानिधाने गुणवारिराशौ ॥ ३५ ॥

प्रथमः सर्गः ।

प्राकारशृंगावलिपद्मरागाः
स्फुरत्प्रभारंजितदेवमार्गाः ।
दीपोत्सवोत्थां जनयंति यत्र
शंकामकांडेपि शरीरभाजाम् ॥ ३६ ॥

यत्रेंद्रनीलाश्मकृतप्रतोली—
मध्येन गच्छत्सविता सदैव ।
राहोर्मुखान्मोक्षणमभ्यसन्वा
संलक्ष्यते मंदगभस्तिरुच्चैः ॥ ३७ ॥

उच्चोच्चहर्म्याग्रकपोतपाली—
संचारिभिर्हंसकुलैरिवेंदुः ।
नवोत्पलग्रासरसाद्विलुप्तो
यत्राभवत्खंडितवृत्तरूपः ॥ ३८ ॥

पौरो जनो यत्र वयोनुरूपं
गृह्णाति वेषं विविधं वृथैव ।
रूपं गुणैर्मंडितमेव तेषां
रूपेण चित्रेण गुणाः सदैव ॥ ३९ ॥

तत्राभवद्भूपतिरिंदुकांतौ
वंशे यदूनां मणिवत्सुवृत्तः ।
उपेंद्रनामा नमितारिवर्गः
प्रसाधिताशेषदिगंतलक्ष्मीः ॥ ४० ॥

कृता वहिश्चेद्द्वयमीश लोके
विश्वंभरोसीति कथं प्रसिद्धः ।
परस्परस्यामुमवेक्ष्यमाणा
हसंति दोषाः करतालमिश्रम् ॥ ४१ ॥

उदस्यतः कोटिशिलां यदीयं
समीक्ष्य दोर्दंडवलं वलीयः ।

अमोचिमानो धनुषा समेतो
नृपाधिपैर्जातिबलावलिप्तैः ॥ ४२ ॥

मनोरथानामधिकं विलोक्य
त्यागं यदीयं जगते हिताय ।
कल्पद्रुमैर्व्रीडितया विलिल्ये
तथा यथाद्यापि न जन्मलाभः ॥ ४३ ॥

नैर्मल्यभा वृत्तगुणान्मदीयां
राजेति नाम्ना सहितां जहार ।
इतीव कोपात्स मृगच्छलेन
धत्ते मृगांको मलिनं शरीरम् ॥ ४४ ॥

निपीडिता भूपवलैरसंख्यैः
प्रस्थानकालेस्य समस्तशक्तिः ।
विश्वंभरा भूरिरजच्छलेन
विश्रामहेतोर्दिवमारुरोह ॥ ४५ ॥

नदीनजाता न चलस्वभावा
न निम्नगा वा न कलंकितापि ।
जलाशया नैव च सत्यभामा
भार्याभवत्तस्य पराजितश्रीः ॥ ४६ ॥

मृगांगनां सा च विलोकितेन
गिरान्यपुष्टां शशिनं मुखेन ।
गतेन हंसीं चमरीं सुकेशैः
सालं विजिग्ये पृथुवंशजाता ॥ ४७ ॥

लक्ष्मीश्चला वारिजनाभ नाह-
मितीव शुद्धिं मनसो विधातुम् ।
पादद्वयस्याभरणच्छलेन
यया तुलाकोटिरथाध्यरोहि ॥ ४८ ॥

त्रैलोक्यसाराद्भुतसुंदरीणां
निर्माय निर्माय गणांश्चिराय ।
यदीयरूपं प्रविधाय वेधाः
सृष्टेः फलं तत्प्रथमं प्रपेदे ॥ ४९ ॥

शंपेव कालजलदं शिखिनं शिखेव
भानुं प्रभेव तनुचंद्रमसं कलेव ।
वेलेव मीननिलयं कमलेव पद्मं
सालंचकार तमिलाधिपातिं मृगाक्षी ॥ ५० ॥

शृण्वन् धर्मकथां नमन् गुरुजनं क्रीडन् कलत्रैः समं
कुर्वन् वैरिवलं शरैरशरणं द्राक्कांदिशीकं रणे ।
संरक्षन्निरुपद्रवं क्षितितलं संभावयन् सेवका-
नित्थं कालमनारतं क्षितिपतिर्निन्ये विनीतैर्वृतः ॥ ५१ ॥

इति श्रीसिंधुराजसत्कमहामहत्तमश्रीपर्पटगुरोः पंडितश्रीमहसेनाचार्यस्य कृते
प्रद्युम्नचरिते प्रथमः सर्गः समाप्तः ॥ १ ॥

## द्वितीयः सर्गः ।

अथान्यदा पिंगजटः शुचिप्रभो
मृगाजिनाषाढधरो कृशीकरः ।
हरेर्विधेर्वा सदनं समाययौ
नभस्तलान्नारदसंज्ञकोपि ॥ १ ॥

गुणैरुपेतः परिहासपेशलो
जिनेन्द्रमार्गेपि रतः कलिप्रियः ।
विभर्ति रूपं सुतरां मनोरमं
सदाभिमानैकधनोपि यो वशी ॥ २ ॥

जिनेंद्रतीर्थेशगणेशचारणां—
स्तपोनिधीन् बोधसमृद्धिभास्वरान् ।
कृताकृतान् जैनगृहान्मनोहरान्
मनुष्यलोके नमतिस्म यः सदा ॥ ३ ॥

हलीशचक्रेशगृहेषु पूजितो
निमित्तरोषी विषयेषु निस्पृहः ।
जिनेंद्रमार्गाभिरतो गुणप्रियः
न यो विषादी प्रणयी न च क्वचित् ॥ ४

तमेवमारात् यदुवंशनायको
विलोक्य चामीकरविष्टराद् द्रुतम् ।
ससंभ्रमः श्यामवपुः समुद्ययौ
तटान् यथा हेमगिरेर्घनाघनः ॥ ५ ॥

निवेश्य चक्री मुनिमासने तदा
तदाज्ञयालंकुरुतेस्म विष्टरम्।
विधाय तस्यापचितिं स पावनीं
यतींद्रदत्ताशिषमग्रहीत्ततः ॥ ६ ॥

मिथो वलश्रीपतिनारदाः कथां
पुराणसत्तीर्थजिनेंद्रसंभवाम्।
वदंति यावत् सरसां जिनेश्वरः
स नेमिरत्रावसरे समाययौ ॥ ७ ॥

विलोक्य नेमिं प्रणनाम सा सभा
नवोदयं चंद्रमिवामलं प्रजा।
मुदं दधानोभिनवां ससंभ्रमं
तपोधनस्तु स्तुतिमाततान सः ॥ ८ ॥

निकेतनं वोधनिधेः सनातनं
शरासनं जैत्रमनंगभूपतेः।
त्वमग्रणीर्धामवतां जिगीषतां
त्वमन्वयो देव मुनीशसंततेः ॥ ९ ॥

विचित्रभव्यांवुजवोधभानवे
जिनाय तुभ्यं भुवनैकचक्षुषे।
सदोदयायाद्भुतधामशालिने
नमोस्तु देवाय तमोपहारिणे ॥ १० ॥

निवेशयामास जिनं स विष्टरे
स्वयं वितीर्णे कलधौतनिर्मिते।
ततो नु चक्री वरमासनं मुदा
विभूषयामास तयोरनुज्ञया ॥ ११ ॥

उवाच वाचं मधुरां तपोधनं
विधाय पूजां वसुदेवनंदनः।

किमत्र कार्यं कृतमद्य यद्गृहं
निरीहपूतं पदपद्मपांशुभिः ॥ १२ ॥
नभः प्रसन्नं विमला दिशो दश
सुगंधिवातो भवनं मनोहरम् ।
विलीनमेनोऽद्य तवागमान्मम
मुनीश पक्कं शुभकर्मणः फलम् ॥ १३ ॥
त्वया कृतं साधु तपोधनाधुना
यदस्पृहेण स्पृहणीयतां पराम् ।
वयं नितांतं गमिता गतैनसा
समस्तलोकेश्वरसाधुसंपदाम् ॥ १४ ॥
निशम्य विष्णोर्वचनं तपोनिधि—
र्जगाद वाचं वसुदेवनंदनम् ।
किमेवमुक्तं भवता मनस्विना
यतो विलोक्या जिनसीरिचक्रिणः ॥ १५ ॥
परस्परं प्रेमविधायिनीं गिरं
निशम्य गाढं मुदितौ बभूवतुः ।
मुनिस्तमापृच्छ्य च तेन संमतो
जगाम सत्याभवनं कुतूहली ॥ १६ ॥
निविष्टया कांचनविष्टरे तया
मुदात्मदर्शे निजरूपसंपदम् ।
निरूपयंत्या स समीपमागतो
मुनिर्न दृष्टो नृपचक्रपूजितः ॥ १७ ॥
प्रकुप्य तस्यै सदनाद्विनिर्ययौ
विनिंदयंस्तामसहंस्तपोधनः ।
जगाम देशं सहसा समुन्नतं
विविक्तमालोचयितुं चिकीर्षितम् ॥ १८ ॥

अवादिते नृत्यति नारदः क्क स
क्क चापमानं परमेवमुच्चकैः ।
शिरो विधुन्वन्निति चिंतयन्मुहु—
स्तपोनिधिस्तत्र गिरौ निषण्णवान् ॥ १९ ॥

करोमि तस्याः किमु दूषणं न वा
विधाय शुद्धिं पुनरेति वल्लभम् ।
परेण वा संप्रति हारयामि किं
तया विना स्यादसुखी जनार्दनः ॥ २० ॥

प्रमृग्य रामां भुवनातिशायिनीं
नियोजये माधवपाणिपल्लवे ।
ततोहमीक्षे नयनांबुसंतति—
प्लुतस्तनीं शोकवतीं सुकेतुजाम् ॥ २१ ॥

इदं वधूनां बहुदुःखकारणं
यथा तथेहास्ति परं न किंचन ।
तदेमि विद्याधरभूभुजां गृहान्
प्रविश्य कन्यां मृगयामि सुंदरीम् ॥ २२ ॥

विमृश्य कृत्यं त्वरया समुद्ययौ
सुकेतुजानादरखिन्नमानसः ।
अनेकविद्याधरराजसेवितं
तपोनिधिर्भूधरमाससाद ॥ २३ ॥

ततोधिकां तत्र न वामलोचनां
ददर्श लावण्यमयीं तदा तदा ।
भृशं विषण्णो मनसा तपोधनः
समाययौ खेचरवासतो भुवम् ॥ २४ ॥

परिभ्रमन् भूमिमसौ मनोहरां
निरूपयन्[1] भूपनिशांतमंडलम् ।
विचित्ररामारमणीयमुच्चकैः
पुरं प्रसिद्धं समवाप कुंडिनम् ॥ २५ ॥

ददर्श भीष्मं विजितारिमंडलं
तपोधनस्तत्र वशी विशांपतिम् ।
ररंज तं श्रीमतिसंज्ञिका वधूः
समृद्धदानं करिणीव दंतिनम् ॥ २६ ॥

तयोरपत्यं प्रविलोक्य विस्मितः
स रुक्मिणं रूपगुणातिशायिनम् ।
प्रणामसत्कारविधानतः परं
प्रपूजितस्तेन तुतोष तापसः ॥ २७ ॥

पितृष्वसा तस्य सनीतिचक्षुषो
निशांतमुच्चैर्यदपालयद्धनुः ।
स्मरावनीशस्य जगज्जिगीषतो
नृपाज्ञया तत्र समाविशद्व्रती ॥ २८ ॥

अथावरोधस्थितसौविदल्लकैः[2]
समं प्रपूज्यानतपादपंकजा ।
जगाद सा रुक्मिणि पुत्रि नारदं
नमस्व पूज्यं बलदेवचक्रिणाम् ॥ २९ ॥

निरूप्य तां चारुचकोरलोचनां
स चिंतयामास कृती यतो मम ।
इयं विधात्री सफलान् मनोरथा—
निति प्रसन्नो मनसा विधेः सुतः ॥ ३० ॥

---

१ विलोकयन् । २ अंतःपुरस्थितरक्षकैः ।

कृतप्रणत्यै समदात् समाशिषं
सुकेतुजाकांतमनोधिवासिनी
भव त्वमाद्या निजरूपसंपदा
जितान्यनारी सुभगत्वरेखया ॥ ३१ ॥

उदीर्य वाचं विरते तपोधने
पितृष्वसुः सा मुखमैक्षत क्षणम् ।
उवाच भीष्मस्य सहोदरा मुनिं
किमेवमुक्तं भगवन्निगद्य ताः ॥ ३२ ॥

स को मुने किं कुलमस्य किं वयः
क्व धाम रूपं किमु का विभूतयः ।
यथायथं मे मनसोस्ति कौतुकं
निवेदयाशेषमशेषितक्रिय ॥ ३३ ॥

उपेन्द्रनामा हरिवंशभूषणः
सयौवनो द्वारवती तदास्पदम् ।
रतिप्रियप्रार्थितरूपवैभवः
समस्तभूपालनतांघ्रिपंकजः ॥ ३४ ॥

निशम्य चैवं जनकानुजावद—
द्यदेतदुक्तं मुनिना मनीषिणा ।
तथेति तत् पुत्रि यतो मया श्रुतं
यतेः पुरा ज्ञानवतोतिमुक्तकात् ॥ ३५ ॥

विधाय चर्यां विहितासनेन ते
विलोक्य रूपं मुनिनेति जल्पितम् ।
इयं भविष्यत्यसुरद्विषो वधूः
कलावतश्चित्तगतेव रोहिणी ॥ ३६ ॥

निशम्य तस्याः श्रुतियोजितामृतं
वचो न वाचा किमपि प्रपंचितम् ।

स्मितप्रभामंडलमंडितास्यया
परं तया नैव ममे मुदा तनौ ॥ ३७ ॥

अथाह भीष्मावरजा नृपात्मजां
दिदेश यत्त्वां दमघोषसूनवे ।
गुरूननादृत्य सुतो महीपते—
र्न सांप्रतं तन्नयमार्गलंघनम् ॥ ३८ ॥

स्थिरीभव त्वं सुतनो विमुच्यतां
शुचः पदं चेदिनरेशदानजम् ।
तथा यतिष्ये मनसा समीहितः
करोति पाणिग्रहणं यथाच्युतः ॥ ३९ ॥

श्रुताच्युतानेकगुणैर्वशीकृतां
मनोभवः सौमनसैर्नृपात्मजाम् ।
तुतोद बाणैर्मृगयुर्यथा भृशं
मृगीमिवाकर्णितगीतनिस्वनाम् ॥ ४० ॥

विधाय विद्धं प्रतिबिंबमद्भुतं
तदीयमादर्श इवामले पटे ।
समीहितार्थं समवाप्य स व्रती
ययौ पुरीं द्वारवतीं समुत्सुकः ॥ ४१ ॥

विवेश वेश्मामरमार्गतः शनै—
र्विलोक्यमानो हरिणा सकौतुकम् ।
वितीर्णकार्तस्वरविष्टरे मुनिः
कृतातिसत्कारविधिः क्षणं स्थितः ॥ ४२ ॥

त्वयाद्भुतं संचरतेह किंचन
क्षितावैवक्षीति मधुद्विषोदितः ।
न किंचिदूचे वचसा स केवलं
प्रसार्य तस्यार्पयदुत्तमं पटम् ॥ ४३ ॥

पटे समारोपितरूपसंपदं
विलोक्य तन्वीं विषमाहिमर्दनः ।
विमोहितो वा लिखितोथवाभवत्
समाधिमापन्न इवोन्मना इव ॥ ४४ ॥

विरोधिभावाश्रितवस्तुसंपदा
विनिर्मितेयं निपुणेन वेधसा ।
तथाहि चंद्राभमुखेरविंदजा
बिभर्ति लक्ष्मीमलकालिमंडिते ॥ ४५ ॥

विधुंतुदः केशकलापभर्मणा
मुखेंदुमादातुमिवाप सन्निधिम् ।
अजायतास्याः सुपयोधरोन्नतिः
समुन्मनीकर्तुमनंगकेकिनम् ॥ ४६ ॥

कृशोदरेस्याः परिधिं स खातिकां
विधाय कामस्त्रिवलिच्छलाज्जयी ।
नितंबदुर्गे स्थितिमेत्य शास्वतीं
जयत्यजय्यः कुसुमेषुभिर्जगत् ॥ ४७ ॥

विधुर्विलुप्तो न च पंगवो गजाः
पिका न मूका न मृगा विचक्षुषः ।
न केकिनः कांतकलापवर्जिताः
प्रजासृजेयं सुतनुः कथं कृताः ॥ ४८ ॥

स्मरप्रियावासनिशांतशालिनो
नितंबबिंबस्य महाधरोपमम् ।
इदं सुवृत्तानुगतं मृगीदृशो
नितांतमूरुद्वितयं विराजते ॥ ४९ ॥

नखेंदुरश्मिप्रकरप्रकाशनः
श्रियं दधत्सातिशयां दिवानिशम् ।

अपूर्वमस्याश्चरणांबुजद्वयं
विराजते निर्जितहंसिकागतेः ॥ ५० ॥

सुरेंद्ररामा किमु किन्नरांगना
किमिंदुकांता प्रमदाथ भूभृताम् ।
नभःसदां स्त्री उत यक्षकन्यका
धृतिः क्षमा श्रीरथ भारती रतिः ॥ ५१ ॥

किमंगकीर्तिः किमु नागनायका
जितान्यकांताजनिकांति विभ्रती ।
वपुःकृता लेख्यपदं विकल्पिनो
ममेति केयं वद तात सुंदरी ॥ ५२ ॥

सुपर्णकेतुं कृतविस्मयं जगौ
तपोधनो मास्म भवः परिप्लवः ।
इयं कुमारी तनया महीपतेः
प्रसिद्धनामा जगतीह रुक्मिणी ॥ ५३ ॥

करोषि चेत्कंसनिपूदनाग्रहं
ततस्त्वमेनां समवाप्स्यसि ध्रुवम् ।
विजित्य कीनाशनिकेतनातिथिं
विधाय वा चेदिपतिं वरीकृतम् ॥ ५४ ॥

नरेंद्रविद्याधरवामलोचना
मया सुरूपा वहवो विलोकिताः ।
न कापि तुल्या चरणेन सुभ्रुवो
विनिर्मितेमां सृजता प्रजासृजा ॥ ५५ ॥

नितंविनीनां रतिविभ्रमे यदि
स्पृहास्ति तामेव वृणीष्व माधव ।
न पौर्णमासीमपहाय यामिनीं
कलावतोन्या रजनी समृद्धये ॥ ५६ ॥

वचोभिधायेति गतेथ नाकिनां
मुनौ मनोजन्मवशीकृतो हरिः ।
कथं मम स्यादुत पाणिपीडनं
समं तया चिंतितवानदभ्रिरम् ॥ ५७ ॥

अनुज्ञया रुक्मिपितृष्वसुस्ततः
कलासमग्रो रुचिमान् सदाकृतिः ।
समागमङ्कूततुषारदीधितिः
समृद्धये माधवचित्तवारिधेः ॥ ५८ ॥

ततः प्रतीहारनिवेदितः सभां
प्रविश्य विष्णुं प्रणिपत्य सादरम् ।
वचोहरस्तं वदतिस्म विस्मितं
मिथोस्ति किंचित्कथनीयमीश ते ॥ ५९ ॥

ततः प्रतस्थे प्रति मंत्रमंडपं
प्रविश्य तस्मिन् मुदितो जनार्दनः ।
निषेदिवान् तत्र वलेन मंत्रिणा
समं यथास्वं मणिहेमविष्टरे ॥ ६० ॥

अथैनमाकार्य निवेश्य सन्निधौ
वदेति वाचं वदतिस्म माधवः ।
ततोभ्यनुज्ञामधिगम्य स क्रमा—
ज्जगाद वाणीमिति सारसंग्रहः ॥ ६१ ॥

जितारिवर्गः प्रथमो धनुष्मतां
परं वशी सिंहकिशोरविक्रमः ।
वशीकृताशेषमहीशमंडलो
नृपेंद्र भीष्मोस्ति कुलांवरांशुमान् ॥ ६२ ॥

निशांतरामा वहवो मनोरमाः
कुलप्रसूताः सुरसुंदरीसमाः ।

सयौवनाः संति तथापि वस्तुतः
प्रियाभवत् श्रीमतिरस्य भूपतेः ॥ ६३ ॥

यथा जयंतः सुरसद्मशासितुः
शिवस्य षड्वक्त्र इवोच्चशक्तिमान् ।
महीभुजस्तस्य सुतो वलोद्धतः
परंतपो रुक्मियुवास्ति नीतिमान् ॥ ६४ ॥

नगाधिराजादिव शंभुवल्लभा
यथोदधेः श्रीर्जनिता मनोरमा ।
हिरण्यगर्भाच्च यथा सरस्वती
तथा च भीष्मादजनिष्ट रुक्मिणी ॥ ६५ ॥

गुरोरनुज्ञामनवाप्य मानिना
कृतारिसंतानजयोत्थदर्पतः ।
मृगीदृशी सा समदायि रुक्मिणा
पुरैव राज्ञे दमघोषसूनवे ॥ ६६ ॥

तया समं तस्य तु चेदिभूपते—
स्तपोभिधे मासि सिताष्टमीदिने ।
विवाहदीक्षाविधिमात्तशंकवः
परामृशंतो गणका व्यजीगणन् ॥ ६७ ॥

गुणालयो द्वारवतीपुरःपति—
र्मुरारिनामास्ति जितारिमंडलः ।
स तैस्तु भर्तेति विलोक्य तां विधेः
सुतः प्रतीतः समदात्तदाशिषम् ॥ ६८ ॥

नृपेंद्र तल्पं कदली सपल्लवा
त्वदीयनामग्रहणं स्थितिक्रिया ।
तवानुरागो मनसः परं सुहृत्
तदादि तस्याः समभून्नतभ्रुवः ॥ ६९ ॥

समागता पूजयितुं मनोभवं
वने लताशोकतले प्रतिष्ठितम् ।
समाश्वसेन् माधव लोललोचना
भवंतमालोक्य चिरान्निर्तंविनी ॥ ७० ॥

निषूदितारे लघु गच्छ कुंडिनं
दिने वितीर्णे गणकेन धीमता ।
मदांधचेदीशवलेन वेष्टितं
श्रियोर्थिनां देवगणेन वांबुधिम् ॥ ७१ ॥

नरोत्तम त्वामपहाय मानिनी
न सेवते सा सुतनुर्नरांतरम् ।
वलान्वितं विक्रमशालिनं यथा
मृगेंद्रजाया मृगराजसंभवम् ॥ ७२ ॥

विचार्य कार्यं मनसा समीहितं
विधेहि दामोदर यत्सुखावहम् ।
यथा स्वरूपप्रतिपन्नवादिनां
प्रवृत्तिसाराः खलु मादृशां गिरः ॥ ७३ ॥

इति निगद्य वचांसि वचोहरे
प्रियतमाप्रहिते प्रियवादिनि ।
निजपदं प्रति संचलिते हरिः
क्षणमसौ हृदिशून्य इवाभवत् ॥ ७४ ॥

एवं विचार्य करणीयमशेषमीशः
सार्धं वलेन कृतकृत्यविनिश्चयेन ।
विभ्रन् मनोरथशतानि रथेधिरुह्य
प्रापत्स कुंडिनपुरोपवनं क्षणेन ॥ ७५ ॥

इति श्रीसिंधुराजसत्कमहामहत्तमश्रीपप्पटगुरोः पंडितश्री महसेनाचार्यस्य कृते प्रद्युम्नचरिते द्वितीयः सर्गः ॥ २ ॥

## तृतीयः सर्गः ॥

---

कौतुकेन पुरमिद्धमीक्षितुं
नंदनं वनमिवागतं धराम् ।
पाकशासनसमानतेजसौ
तद्वनं ददृशतुर्यदूत्तमौ ॥ १ ॥

संप्रविश्य बलकेशवौ वनं
तिष्ठतः स्म निभृतं लतालये ।
तौ समुत्कमनसौ यथा सुरौ
देवसद्मनि मनोरमे सुखम् ॥ २ ॥

पूर्वमेव शिशुपालभूपति—
स्तत्परीत्य परितः पुरं तदा ।
भूयसा निजबलेन तस्थिवान्
मेरुशृंगमिव तारकागणः ॥ ३ ॥

तावदात्मपरिवारसंगता
रुक्मिणी पुरवराद्विनिर्ययौ ।
प्राविशच्च भवनं लतामयं
पूजितुं तरुतले मनोभुवम् ॥ ४ ॥

तां विलोक्य नवमोऽर्द्धचक्रिणां
भंगुरालकललाटपट्टिकाम् ।
कामबाणसमदीर्घलोचनां
चंद्रबिंबवदनां कलस्वनाम् ॥ ५ ॥

चारु कंबुनिभकंधराधरां
पीवरोन्नतपयोधरानताम् ।

मालतीकुसुमदामबाहुकां
वज्रमध्यसदृशावलग्नकाम् ॥ ६ ॥

मेखलापदमनोजमंदिरां
दिक्करींद्रकरपीवरोरुकाम् ।
जंघयोः सदृशरंभयोरधो
विभ्रतीं चरणपंकजद्वयम् ॥ ७ ॥

एवमाह तव वाक्यतः प्रिये
द्वारिकापतिरहं समागतः ।
तत्प्रसीद कुरु भाजनं दृशो—
मां प्रिये त्वदवलोकलोलुपम् ॥ ८ ॥

भाषितेति न शशाक भाषितुं
लज्जयाथ चरणेन केवलम् ।
भूतलं विलिखतिस्म रुक्मिणी
विभ्रती वलितकंधरं मुखम् ॥ ९ ॥

इंगितात्समधिगम्य मानसं
सुभ्रुवः स्वरथरोपणच्छलात् ।
आलिलिंग वसुदेवनंदन—
स्तां युगेन भुजयोः सवेपथुम् ॥ १० ॥

शार्ङ्गिणा निजगदे कदंबकं
भूभृतां जलजपूरणात्पुरा ।
पार्थिवा नृपसुता मया हृता
तद्विमोचयत शक्तिरस्तिचेत् ॥ ११ ॥

इत्युदीर्य रथमाश्वतत्वरत्
भीष्मरुक्मिशिशुपालनायकम् ।
चुक्षुभे च रिपुसैन्यमाकुलं
क्षुब्धवारिधिविभीषणारवम् ॥ १२ ॥

मत्तवारणघटाभिराकुलं
वाजिवृंदखुरदारितावनिम् ।
सांपरायिकरथौघसंकुलं
चारु वीरधृतशस्त्रमुल्बणम् ॥ १३ ॥

विष्णुना बलसखेन धन्विना
दूरतोपि रुरुधे द्विपद्बलम् ।
अब्धिनोद्गतजलोर्मिणा यथा
धावदंबुसरितामिवोद्धतम् ॥ १४ ॥

केवलौ हरिबलौ रणोद्यतौ
भूरि तद्बलमवेक्ष्य चागतम् ।
कर्मदारुणमकारि किं मया
रुक्मिणीति विषसाद मानसे ॥ १५ ॥

तां विलोक्य वदतिस्म सादरं
वेपिनीं च रुदतीं च माधवः ।
पश्य वारिजविलोचने क्षणात्
दिक्षु नीतमरिसैन्यमाहवे ॥ १६ ॥

पश्य पश्य मम शक्तिमद्भुता—
मंगुलीयपविचूर्णनात् प्रिये ।
सप्ततालशरपातभेदिनी—
मित्युदीर्य कृतवानसौ तथा ॥ १७ ॥

तद्बलं त्रिभुवनाधिकं हरे—
र्वीक्ष्य राजदुहिता कृतांजलिः ।
सस्मिता तमभयं कृशोदरी
याचतेस्म पितृसोदरादिषु ॥ १८ ॥

एवमस्त्विति निगद्य केशव—
श्चेदिराजमभि भीतिवर्जितः ।

क्रोधदीप्तवदनो न्यवर्तत
　　क्षीववारणपतिं यथा हरिः ॥ १९ ॥

शीरिणा निशितशस्त्रमोचिना
　　नाशितं बलमितस्ततो गतम् ।
मुक्तचंडतरवारिसंकुलं
　　मेघवृंदमिव वायुनोन्नतम् ॥ २० ॥

वीक्ष्य भग्नमथ रुक्मिणा बलं
　　रोषरक्तवदनेन धावता ।
रौहिणेयमभिसंदधे शरः
　　कार्मुके क्वणितभीतकातरे ॥ २१ ॥

तेन तस्य विदधे न संगमात्
　　सायकेन शितिनापि किंचन ।
केवलं झगिति कोपपावको
　　ग्रावणीव पतितोंगतोंजसा ॥ २२ ॥

संप्रहृत्य विफलीकृतायुधं
　　नागपाशदृढरज्जुभिर्घनम् ।
तं बबंध मुशली बलोद्धुरं
　　शक्रजित्पवननंदनं यथा ॥ २३ ॥

दानिनं विपुलवंशमुन्नतं
　　भीषणं कुपितमानसं रणे ।
चेदिराजमवधीद्गदाधरः
　　सिंधुरं मृगपतिर्वधोद्धतम् ॥ २४ ॥

खड्गखंडितखुराश्वसंकटं
　　रौद्रनिर्मितकबंधनर्तनम् ।
कुंभिकुंभगलदस्रुकर्दमं
　　भग्नभूरिरथरुद्धदिग्मुखम् ॥ २५ ॥

संविधाय रणमित्यनाकुलौ
भीष्मराजतनयं विमुच्य च।
स्वां पुरीं प्रति कृतोत्सवामुभा
जग्मतुः प्रमुदितौ बलाच्युतौ॥ २६॥

रम्यरैवतकसानुमंडने
देवनंदननिभे वने तयाः।
पाणिपीडनविधिर्विधानतः
प्रीतयोरभवदग्निसन्निधौ॥ २७॥

तत्र वृत्तविधिपाणिपीडनं
चारुभूषणधरं वधूवरम्।
बांधवैः सह विवेश तत्पुर
दर्शनोत्सुकविलासिनीजनम्॥ २८॥

माधवं नववधूसमन्वितं
द्रष्टुमन्यकरणीयवर्जितः।
लाजपाणिपुरसुंदरीजनो
हर्म्यपंक्तिशिखरेष्वचेष्टत॥ २९॥

काचिदायतविलोचनोत्सुका
कज्जलेन तिलकं कपोलयोः।
कुंकुमं नयनयोर्निधाय च
प्रारुरोह भवनाग्रकुट्टिमम्॥ ३०॥

केशपाशमपरा जवात् श्लथं
भ्रंसि माल्यमपि नावगच्छति।
पाणिपद्मविधृतस्तनांशुका
त्यक्तविभ्रममगाद्विलोकितुम्॥ ३१॥

अन्यया कनकनूपुरद्वय—
प्रस्तुतश्रवणभूषया पुनः।

द्रष्टुमाशु गतया वणिक्पथे
चक्रिरे स्मितमुखा वधूजनाः ॥ ३२ ॥

मेखलापथनिवेशितं स्फुरत्—
तारहारलतयातिमुग्धया ।
जालमार्गनिहितास्ययान्यया
दृश्यतेस्म हरिरायतभ्रुवा ॥ ३३ ॥

श्रीपतिर्निजवधूसमन्वितो
मन्मथं रतिसखं विडंबयन् ।
यावदाविशति मंदिरं स्त्रिय—
स्तावदेवमवदत् परस्परम् ॥ ३४ ॥

दानमद्भुतमदायि किं तपः
पूर्वजन्मनि कृतं सुदुष्करम् ।
दैवतं सुमहदेतयाथवा
राधितं यदयमादधौ करम् ॥ ३५ ॥

तद्व्रतादि यदि कोपि सत्यधी—
रादिशेद्वयमपीह निस्पृहाः ।
चक्षुरादिविषये विदध्महे
तत्तथैवमिति काश्चिदूचिरे ॥ ३६ ॥

एवमादिवचनं वणिक्पथे
संकटे मृगदृशां समानयत् ।
कर्णजाहमतुलं वधूवरं
संपदास्पदमवाप मंदिरम् ॥ ३७ ॥

रेवतीसदनमाविशद्बल—
स्तद्वियोगकृशकांतिसुंदरः ।
बाहुदंडदमितारिमंडलो
राजहंस इव पद्मिनीसरः ॥ ३८ ॥

सद्म वारवनितासमन्वितं
वस्तु कांचनधनादिपूरितम् ।
सप्तभूमिकमनेकवाहनं
रुक्मिणीवसतये दिशन्नृपः ॥ ३९ ॥

मानसे वपुषि वाचि रुक्मिणी
शार्ङ्गिणो निविविशे गुणाधिका ।
खेचरी तु विरहार्तिपीडिता
दुर्बलापि न ममौ कथंचन ॥ ४० ॥

रुक्मिणीवदनपद्मषट्पदे
माधवे रतिसुखाब्धिमध्यगे ।
नारदेत्र परितुष्टमानसे
दुःखमापि परमेव सत्यया ॥ ४१ ॥

अन्यदा निधुवने समं तया
पत्रपूगफलचूर्णसंचयम् ।
चर्वितोज्झितमनंतसौरभं
स्वांबरे निशि ववंध माधवः ॥ ४२ ॥

तत्पिधाय सहसा निजांशुकं
केशवः प्रणयकोपसंगताम् ।
वंचितुं प्रियतमां सुकेतुजां
प्राविशत् सदनमद्भुतास्पदम् ॥ ४३ ॥

तं विलोक्य नववल्लभापतिं
सा चुकोप मनसाभिमानिनी ।
वक्रवाक्यवचनैरतर्जयत्
सोपि तां प्रति वितीर्णसच्छ्चाः ॥ ४४ ॥

नर्ममर्मपरिचालनागिरः
सत्यया सह विधाय केशवः ।

स्वांचलस्थगितवक्रपंकजः
स्वापकेलिमवलंब्य तस्थिवान् ॥ ४५ ॥

उत्तरीयकनिवद्धवस्तु यत्
सौरभाहतपडंघ्रिमंडलम् ।
तद्विलंबि शयनाद्बहिः स्थितं
सा विलोक्य परमीर्ष्ययाददे ॥ ४६ ॥

सा प्रपीष्य तदलं मृगेक्षणा
माधवं प्रति लिलेप सुंदरम् ।
स्वं वपुस्तदवलोक्य केशव—
स्तां जहास करतालमुच्चकैः ॥ ४७ ॥

पत्रपूगफलचूर्णसंचयं
चर्वितं वदनलीलया युतम् ।
आयताक्षि मम वद्धमंचले
पार्वणेन्दुमुखि किं न पश्यसि ॥ ४८ ॥

त्वत्पिता खचरचक्रनायको
वल्लभा मम यशोविभूषिता ।
आस्तथापि परकीयमादरा—
दंगभोगमनुलेप्तुमीहसे ॥ ४९ ॥

सा निशम्य वचनं विचक्षणा
रोषरक्तवदनावदत् प्रियम्
मेनुजा शठ हठात्त्वया हृता
सा मया तव पुरो गुरूकृता ॥ ५० ॥

अंगभोगमपि रुक्मिणीमतं
मत्प्रियं प्रियतमांचले स्थितम् ।
नंदपुत्र तव काधिकारिता
नर्मकर्मणि विदग्धभूषणे ॥ ५१ ॥

वाक्यमेवमभिधाय मानिनी
जोपमास्थ मुदिता जगावथ।
रुक्मिणी परमरूपसंपदं
द्रष्टुमस्ति मम देव कौतुकम् ॥ ५२ ॥

एवमस्तु किमिवात्र दूषणं
तद्गृहान्मुररिपुर्विनिर्ययौ ।
तन्मदोन्नतगिरींद्रपातनं
कर्तुमापदथ रुक्मिणीगृहम् ॥ ५३ ॥

तामवाप्य च जगाद माधवः
श्वो वनं व्रज सितांशुका सती।
तच्चकार च तथेति भीष्मजा
भर्तृवाक्यवशगा हि योषितः ॥ ५४ ॥

वायुकंपकृतशाखितांडवं
भृंगराजिविहितोरुतोरणम् ।
पक्षिनादजयशब्दसुंदरं
मत्तकेकिकुलनृत्यसंकुलम् ॥ ५५ ॥

वल्लभेन सहिताथ सा तत—
स्तद्गृहोपवनमाप सुंदरम् ।
कल्पशाखिभिरलंकृतं यथा
नंदनं वलभिदा पुलोमजा ॥ ५६ ॥

फुल्लतामरसचारुलोचना
लोलहारविलसत्पयोधरा ।
हारिहाटकशिलानितंबिनी
भाति तत्र वनितेव वापिका ॥ २७ ॥

रक्तशोकहृदशोकपल्लवे
वामपाणिमुपयुज्य दक्षिणम् ।

वक्रपक्ष्मतरलालिवारिणे
तस्य मूलनिहितैकपादया ॥ ५८ ॥

स्फाटिकावनितले पदक्रमं
संविधाय च विलोचने स्थिरे ।
स्थीयतामिति कृशोदरि त्वया
तामथैवमभिधाय सोऽगमत् ॥ ५९ ॥

खेचरीसदनमाप्य सत्वरं
तामथो निगदतिस्म केवलम् ।
भूषयस्व करभोरु नंदनं
रुक्मिणी त्वदनुयास्यति प्रिये ॥ ६० ॥

रूपयौवनकुलातिगर्वयो—
र्ज्ञातुमत्र चरितं तयोरथ ।
कौतुकेन निभृतं समीपगं
गुल्ममध्यमविशच्च माधवः ॥ ६१ ॥

तां तथा समवलोक्य सत्यया
चिंत्यतेस्म किमियं सुरांगना ।
नागयोषिदथ सिद्धकन्यका
रोहिणी किमुत कामवल्लभा ॥ ६२ ॥

या ममात्र वनदेवता वने
पूर्वजन्मकृतपुण्यपाकतः ।
सा मदीयगुणरंजितेव वा
चक्षुषोरगमदाशु गोचरम् ॥ ६३ ॥

नूनमिष्टवरदेति तां मुदा
देवतां समभिराद्धुमुद्यता ।
वस्त्रभूषणसमन्विता ततः
सा ममज्ज मणिवापिकाजले ॥ ६४ ॥

सा विगाह्य मणिवापिकाजलं
संप्रपूज्य कुसुमैः सुगंधिभिः ।
पादयोः सविनय प्रणम्य तां
याचतेस्म वरमिष्टमंजसा ॥ ६५ ॥

रुक्मिणीं प्रति विरक्तमानसं
त्वं विधेहि मयि देवि किंकरम् ।
माधवं यदि ममास्त्यनुग्रहो
दैवतं हि फलवद्विलोकनम् ॥ ६६ ॥

देवतास्तुतिविधायकं वचः
संनिशम्य विपुलोरसोन्नतः ।
गुल्ममध्यगहनादसौ हसन्
निर्ययौ खचरराजकन्यकाम् ॥ ६७ ॥

अब्रवीच्च सुतनु त्वयाधुना
रुक्मिणीचरणपूजनाद्यदि ।
प्राप्यतेत्र सुभगत्वमुन्नतं
येन न त्यजसि मानसंगमम् ॥ ६८ ॥

माधवात्समधिगम्य रुक्मिणीं
सा प्रसन्नवदना बहिः स्थिरा ।
संचुकोप हृदये विचक्षणा
तं हसद्वचनमाह मर्मगम् ॥ ६९ ॥

यादृशो जगति नंदनंदनो
गीयसे खलु तथाविधो भवान् ।
गोपवर्जमपरस्य कस्य वा
जायते विलसितं खलेदृशम् ॥ ७० ॥

तादृशोपि विधिना निरूपितो
राज्यभारवहने सुदुस्तरे ।

त्वं तथापि न जहासि पूर्वजं
प्राकृतं गुणमनन्यसंभवम् ॥ ७१ ॥
भीष्मजा मम कनीयसी स्वसा
पूजिता यदि मया सपर्यया।
किं त्वया परमतोषकारिणा
निर्विवेक हसितं निरर्थकम् ॥ ७२ ॥
तामसौ समवबुध्य नामतः
सत्यकीर्ति नमतिस्म रुक्मिणी।
शारदेन्दुवदना प्रियंवदा
प्राकृतो हि विनयो महात्मनाम् ॥ ७३ ॥
दोर्भ्यां समालिंग्य परस्परं ते
संभाष्य कल्याणवचांसि तुष्टे।
रूपं निरूप्याप्रतिमं विदग्धे
स्वं स्वं निवासं प्रतिजग्मतुस्ते ॥ ७४ ॥
दूतोन्यदा कुरुपतेरविशतत्सभायां
श्रीश्रीपतेः खचरराजसुतासखस्य।
पादौ प्रणम्य च विमुच्य च लेखमग्रे
दत्तासने निविविशे परितुष्टचेताः ॥ ७५ ॥
स्वस्तिश्रीकरिपत्तनात् क्षितिपतिर्दुर्योधनः सादरं
श्रीमद्द्वारवतीपुरे रिपुशिरश्चूडानतांघ्रिं हरिम्।
आनंदादिति वक्ति तेभिरुचितं स्याच्चेत्ततो भाविनो-
रावाभ्यां सुतयोर्विवाहविधिना मैत्री विधेया परा ॥ ७६ ॥
ज्ञातार्थो मुदितमनास्तथेति मत्वा
स्वां भूषां निजवसनैः प्रदाय चास्मै।
संप्रेष्य स्वमतवचोहरैश्च दूतं
तत्रासौ हरिरनघः सुखेन तस्थौ ॥ ७७ ॥

इति श्रीसिंधुराजसत्कमहामहत्तमश्रीपप्पटगुरोः पंडितमहासेनाचार्यस्य कृते प्रद्युम्नचरिते तृतीयः सर्गः॥ ३ ॥

---

# चतुर्थः सर्गः ।

---

अथ परंतपरुक्मिसगर्भया
परमरूपसमृद्धकलागुणैः ।
खचरराजसुता विजिता सती
क्षपितमानमदा हृदि विव्यथे ॥ १ ॥

तदपकारपरापि दिवानिशं
न तदुपायमवाप कदाचन ।
समुपलभ्य वचोहरतो वचो
मनसि तोषमगात् खचरी तदा ॥ २ ॥

सपदि मे तनयो भविताग्रज—
स्तदनु भीष्ममहीपतिसंभवा ।
सुतमवाप्स्यति वाथ न वा तरां
मदनु सा वपुषा वयसा यतः ॥ ३ ॥

नृपसुता मदशातनहेतवे
हरिसमक्षमिमां विदधे स्थितिम् ।
इति विचिंत्य तदा प्रजिघाय सा
सपदि भीष्मसुतां प्रति दूतिकाम् ॥ ४ ॥

सविनयं प्रणिपत्य नृपात्मजां
वदति सा मम देवि न दूषणम् ।
खचरराजसुतावचनाद् द्रुतं
किमपि ते पदयोः कथयाम्यहम् ॥ ५ ॥

प्रथमसूनुविवाहसमुत्सवो
यदि भवेत्तव रुक्मिणि पुण्यतः ।

कुटिलकोमलनीलशिरोरुहान्
पदतले तनयस्य निजान् दधे ॥ ६ ॥

अथ मदीयसुतस्य करग्रहो
भवति तेऽप्ययमेव विधिः स्फुटम् ।
इति निशम्य विहस्य च सा जगौ
वदति यन्नगिनी मम तत्प्रमा ॥ ७ ॥

स्थितिमिमां प्रविधाय परस्परं
प्रतिभुवं हलिनं प्रतिपद्य ते ।
सकलसभ्यसमेतनरोत्तम
प्रभुसमक्षमुदारमती स्थिते ॥ ८ ॥

अथ निशाविरमे वरमंदिरे
नृपसुता शयिता शयने मृदौ ।
मदनजन्ममहोत्सवसूचका
य इह तानखिलान् सुखमैक्षत ॥ ९ ॥

नभसि देवविमानमधिष्ठिता
किल चरामि सुखं निजलीलया ।
त्रिदशकुंजरमर्कहुताशनौ
कुमुदबंधुमपांपतिमुद्धतम् ॥ १० ॥

इति विलोक्य सुता नृपतेस्तदा
समवबुध्य निवेद्य च विष्णवे ।
प्रियतमेन निवेदिततत्फला
परमतोषमियाय नृपात्मजा ॥ ११ ॥

मधुचरस्त्रिदिवादथ षोडशात्
समनुभूय सुखं त्रिदशाधिपः ।
समवतीर्य ततः पुरुपुण्यत—
स्तदुदरस्य बभूव विभूषणम् ॥ १२ ॥

शुचिनिशाशयने शयिता सुखं
खचरराजसुतापि तथैव तान्।
समवलोक्य बभार दिवश्च्युतं
सुरमसावुदरेण गुणांबुधिम्॥ १३॥

नयननिर्मलतातनुपांडिमा
मलिनिमा कुचचूचकयोर्भृशम्।
अलसता गमनेऽकृशतोदरे
समभवत्सुतनोर्गुरुगर्भतः॥ १४॥

इति विकारमवाप्य शरीरजं
कृतसमस्तसमीहितदोहदा।
शुभतिथिग्रहयोगसमुच्चये
प्रवरलक्षमधरं सुपुवे सुतम्॥ १५॥

वियदपांशु दिशो दश निर्मलाः
सुरभयन् ककुभो मरुदाववौ।
इति शुभानि बभूवुरनेकधा
जगति जन्मनि पुण्यवतस्तदा॥ १६॥

समवलोक्य सुतं रविरोचिषं
परमतोपमवाप्य सबांधवा।
सुतसमुद्भवसूचकमच्युतं
प्रति जिघाय नरं नृपतेः सुता॥ १७॥

स च विलोक्य तदा शयितं हरिं
निविविशे शनकैश्चरणांतिके।
तदनु खेचरजाप्रहितो नरः
समुपगम्य शिरःसविधे स्थितः॥ १८॥

क्षितिपतावथ जागरिते क्षणात्
प्रथममंघ्रिसमीपमुपेयुषा।

इति तदासिदधे पुरुषेण सः
क्षितिप नन्द चिरं सुतजन्मना ॥ १९ ॥

इति निशम्य वचो मुदितस्तदा
नृपतिलक्ष्म विमुच्य नरोत्तमः ।
सकलमेव नराय ददौ धनं
स्वसुतजन्मनिधाननिवेदिने ॥ २० ॥

मुररिपुर्वदतिस्म नियोगिनः
प्रमुदितः सहसा विहितानतीन् ।
निगडतः परिमोच्य गणं द्विषां
विधिवदाशु पुरे क्रियतां क्षणः ॥ २१ ॥

तदनु नम्रनरेण हरेस्तदा
खचर[1]राजसुतासुतलंभने ।
चलितचारुमुखस्य निवेदिते
धनमदात्[2]स महोत्सवपूर्वकम् ॥ २२ ॥

क्षितिपतेः सुतजन्ममहोत्सवे
पुरमवाप परां रमणीयताम् ।
[3]गजपुरं पर[4]भागमगाद्यथा
जन[5]नकालमहे जिन[6]चक्रिणाम् ॥ २३ ॥

प्रियतमांगजलाभवशीकृतो
धनमलं वितरन् सकलार्थिने ।
प्रमदयन् निजबांधवसंततिं
सु[7]खमसौ[8] परितुष्टमना[9]ः स्थितः ॥ २४ ॥

अथ ग[10]ते तनयोत्सवसंपदा
यदुनृपस्य तदा दिन पंचके ।

---

१ सत्यभामा । २ कृष्णः । ३ हस्तिनागपुरम् । ४ गुणोत्कर्ष । ५ जन्ममहोत्सवे । ६ तीर्थंकरचक्रवर्तिनां, अथवा शान्तिकुन्थ्वराणाम् । ७ सुखं यथास्यात्तथा । ८ कृष्णः । ९ सन् । १० सति ।

हरिसुतापहृतिं बत[1] भाविनी-<br>
मसहमान इवास्तमगाद्रविः[2] ॥ २५ ॥

मुकुलिताब्जविलोचननिष्पतन्-<br>
मधुपसाञ्जनबाष्पजलाविला<br>
करुणचक्ररुतच्छलितो[3] रुद-<br>
द्दिनकरेऽस्तमिते नलिनीवधूः ॥ २६ ॥

पतति मूर्च्छति चुम्बति वल्लभं<br>
वलितकंधरमेनं[4] मुदीक्षते[5] ।<br>
दिनकृते[6] परिकुप्यति चक्रिका[7]<br>
विरहकातरधीरहरत्यये ॥ २७ ॥

नियतितो[8] जलधौ पतिते रवौ<br>
रुचिररागकृताम्बरशोभया ।<br>
विधवतां[9] असहास्मि निषेवितुं[10]<br>
चिरमिवानुगतं किल संध्यया ॥ २८

तपनकामुकमिष्टमपि[11] क्षणा-<br>
द्दपरदिग्गणिका[12] वियदालयात्[13] ।<br>
प्रकृतिरक्तमपीक्षणयोः[14] प्रियं<br>
विवसुमाशु[15][16] बलान्निरकासयत्[17] ॥ २९ ॥

सति तमोनिकरे प्रविजृंभिते[18]<br>
समभवत्समतास्थलनिम्नयोः[19] ।<br>
प्रभुतमे मलिने हि गुणाधिको<br>
न लभते गुणगौरवमद्भुतम् ॥ ३० ॥

---

१ खेदसूचकमव्ययम् । २ अस्ताचलम् । ३ चक्रवाकशब्दव्याजेन । ४ वल्लभम् । ५ पश्यति । ६ सूर्याय । ७ चक्रवाकी । ८ विधिवशात् । ९ रण्डत्वम् । १० सेवितुं । ११ सूर्यवल्लभम् । १२ पश्चिमदिग्वेश्या । १३ आकाशगृहात् । १४ नेत्रयोः । १५ विकिरणं, पक्षे-दरिद्रं । १६ शीघ्रं । १७ निर्घाटयतिस्म । १८ विस्तरिते । १९ उच्चनीचप्रदेशयोः ।

तमसि भिन्नरसांजनसन्निभे
सति न भूर्न नभो न दिशो दश ।
न सरितो न नगा न च वीरुधो[1]
निरवधिर्जगतो मलिने प्रभौ ॥ ३१ ॥

तमसि सान्द्रतमे[2] गृहदीपिका-
निवहमाप परां रमणीयताम् ।
मलिनमध्यगतोऽपि विराजते
विमलमूर्तिरलं सुदशान्वितः[3] ॥ ३२ ॥

अथसुतस्य विधाय विधानतो
विविधरक्षणमच्युतवल्लभा ।
मृदुतमे शयने वरमंदिरे
सुखमशेत महर्द्धिकृतोत्सवा ॥ ३३ ॥

कनकपूर्वरथोन्यभवे[4] छला-
न्मधुहृतप्रमदो[5] विरहातुरः ।
इतरदुष्करपंचतपस्तपन्[6]
क्षपितमूर्तिरभूच्चिरकालतः[7] ॥ ३४ ॥

कुमततत्वनिवेशितमानसो
मृतिमवाप्य स[8] दानवताम्[9]अगात् ।
नृपसुताभवनोपरि[10]गच्छतो
गतिरमुष्य[11] परं स्खलिताभवत् ॥ ३५ ॥

मम कुतो व्रजितः स्खलिता गति-
श्चिरमिति प्रविचिन्त्य विबुध्य सः[12] ।
गतिनिवारणकारणमर्भकं[13]
झटिति कोपमगाच्छिशुवैरिणे ॥ ३६ ॥

---

१वल्लीवृक्षादयः। २ अधिकतरे । ३ श्रेष्ठदशासहितः वा वर्तिकासहितः । ४ कनकरथः । ५ मधुनाहृता प्रमदा यस्य तथोक्तः । ६ अन्यप्रणीतपंचाग्नि-साधनं तपः । ७ कृतविग्रहः । ८ कनकरथः ९ असुरदेवत्वम् । १० रुक्मिणी । ११ दैत्यस्य । १२ दैत्यः। १३ बालं ।

कुमति[1]संभवबोधनिरूपणा-
　　द्विदितवानिति[2] मे दयिता पुरा[3] ।
मधुचरेण हृता तद[4]मुं[5] हठा-
　　द्यदि न हन्मि वृथा मम दैत्यता ॥ ३७ ॥

इति विचिन्त्य चिरं समवाप्य तत्
　　नृपसुताभवनं परिवेष्टितम् ।
निशितशस्त्रकरैः सुभटैस्तदा
　　यदवलोक्य मनाक् चकितोऽभवत् ॥ ३८ ॥

भटकदम्बकमाशु विमोहयन्
　　नृपसुतं प्रथमं समुपाहरत् ।
वियति दूरमगाच्च ततः क्षणात्
　　ज्वलितधूमशिखाख्यमहासुरः ॥ ३९ ॥

शिशुममुं प्रविलोक्य स दानवः
　　स्मृतपराभवकारणकोपतः ।
हसति जल्पति दारुणमीक्षते
　　किमिति ते विदधामि सुदुष्करम् ॥ ४० ॥

इति विकल्पकदम्बकमुच्चकै-
　　रभवदाशु सु[6]तस्य दिते[7]स्तदा ।
किमु रिपोः करवाणि शठात्मनः
　　कथममुं तृणहानि विधानतः ॥ ४१ ॥

उ[9]त करोमि खरैर्नखरैः क्षतं
　　जलनिधौ निदधे वडवानले ।
किमथवापिदधे[10] दृषदा[11] रिपुं
　　किमु ददामि बलिं बलिभोजिनां[12] ॥ ४२ ॥

---

१ विभंगोत्पन्नावधिज्ञानप्ररूपणात् । २ ज्ञानवान् । ३ पूर्वभवे । ४ तस्मात् कारणात् । ५ बालकं । ६ धूमशिखस्य । ७ दैत्यस्य । ८ शिशुं । ९ अथवा । १० आच्छादयामि । ११ पाषाणेन । १२ काकानां ।

इति विचिंत्य चिरं स[1] निनाय[2] तं[3]
गुरुगिरिं [4]वरतक्षकनामकं ।
घनमहाखदिराटविमध्यगं
शिशुममुष्य[5] चकार च कंदरे ॥ ४३ ॥

उपरि [6]तस्य विधाय शिला तदा
निजपदं गतवानथ दानवः
फलमसावुपर्यातु पुराभवे
स्वयमनुष्ठितदुर्नयशाखिनः ॥ ४४ ॥

परभवे तपसोतिसुनिर्मल
चरमदेहतया न च दानवः ।
मृतिम[10]मुष्य विधातुमलं हठात्
सुकृतिनां प्रभवंति न वैरिणः ॥ ४५ ॥

निशि शिशोरसुरेण रुपावता
किमु कृतं रिपुणा बत मां विना ।
इतिनिरूपयितुं तदनुष्ठितं
रविरलंकृतवानुदयाचलम् ॥ ४६ ॥

अथ गिरौ विजयार्द्धसमाह्वये
दिशि यमस्य समस्ति पुरं परं ।
त्रिद[11]शावाससमृद्धिनिबंधनं
[12]जलदकूटमिति प्रथितं भुवि ॥ ४७ ॥

तदधिपो नृपतिः [13]सितिसंवरः
समधिरुह्य विमानमलंकृतः ।
नृपगुणैः सह [14]कांचनमालया
वनविहारमगान्निजलीलया ॥ ४८ ॥

---

१ दानवः । २ नीतवान् । ३ शिशुं । ४ पर्वतनाम । ५ पर्वतस्य । ६ शिशोः । ७ वालकः । ८ प्राप्नोतु । ९ समाचरितान्यायद्रुमस्य । १० वालस्य । ११ स्वर्गसमृद्धिः कारणं । १२ मेघकूटं । १३ कालसंवरः । १४ महिष्यया ।

सुरनदीपुलिने[1] कदलीवने
हिमगिरौ पृथुमंदरकंदरे ।
समनुभूय सुखं स तया समं
गिरिमवाप[2] तमर्मकभूपितम् ॥ ४९ ॥

खचरराजविमानमथाम्बरे
चरमदेहशिशोरुपरिस्थितम् ।
व्रजति यावदिदं न पुरस्[3]ततः[4]
समभवत्से[5] तदा हृदि विस्मितः ॥ ५० ॥

विशदबोधनिधिर्मुनिनायकः
किमुत कोपि रिपुर्न दुराशयः ।
जिनपतेरुत किंतु निकेतनं[6]
स्थितमधः किमुतोऽत्य[7]शरीरभाक् ॥ ५१ ॥

समवतीर्य ततो वियतो गिरिं
पृथुकवक्त्रविनिर्गतमारुतात् ।
विदधती ददृशे न मनोन्नती
खचरराजसुतेन शिला तदा ॥ ५२ ॥

गुरुशिलामपनीय[8] नभःसदा
क्षितितले ददृशे शयितोऽर्भकः ।
विधिवशाल्लभते भवभृद्[9]दशा-
फलमिति प्रकटं कथयन्निव ॥ ५३ ॥

कुटिलकुंतलमंडितमस्तकं
विकचपद्मदलायतलोचनं ।
वदननिर्जितपर्वनिशाकरं
नवमृणाल[10]समानभुजालतम् ॥ ५४ ॥

---

१ गंगातटे । २ तक्षकनामकं । ३ अग्रे । ४ पर्वतात् । ५ खगः । ६ गृहं । ७ चरमशरीरी । ८ दूरीकृत्य । ९ प्राणी । १० नवकमलसदृशबाहुलतं ।

चटुलपाणिपदं[1] विहितस्मितं
चरमदेहतया जितवैरिणं ।
विविधलक्षणलक्षितविग्रहं
सकलसत्वमनोनयनोत्सवम् ॥ ५५ ॥

स[2] परिगृह्य शिशुं मुदितोऽवदत्
प्रिय[3]तमामिति बालमदाम्यहम् ।
तव गृहाण सुतं दयिते शुभं
त्वमसि देवि यतोऽगजलाल[4]सा ॥ ५६ ॥

इति निशम्य गिरं दयितस्य सा[5]
प्रविततान मुदा करपल्लवौ ।
समवलोक्य निकुंचितपाणिकां
समगदद्दयितामिति सादरम् ॥ ५७ ॥

किमुत ते दयिते करसंहति—
स्तनय पंचशती तव विद्यते ।
भवति [6]तच्चर[7]णाहतिगोचरो
हृदयशल्यमयं मम बालकः ॥ ५८ ॥

यदि भवेत्सुकृतं च कृतं मया
परभवे तदयं शिशुराविशत् ।
प्रियतमोदरमेव न मे कुत—
स्तर्द[8]लमार्ये सुतेन ममामुना ॥ ५९ ॥

इति निगद्य च सा भवदुच्चकै—
र्नयनवारिपरिप्लुतलोचना ।
समवलोक्य जगाद स तां पुनः
सुतनु मा भव दुःखितमानसा ॥ ६० ॥

---

१ चंचलकरचरणम् । २ कालसंबरः । ३ कनकमालां । ४ पुत्राभिलाषा । ५ कनकमाला । ६ तस्मात् । ७ पादताडनविषयः । ८ पूर्यतां ।

प्रियमे युवराजपदं मया
तव समक्षमदायि सुताय ते ।
किमिति शोकहिमेन विलंघ्यते
मुखसरोजमिदं वत सांप्रतम् ॥ ६१ ॥

समुपलभ्य च तद्वचनं तया
शिशुरसौ जगृहे कनकस्रजा ।
निजपदं च जगाम स खेचरः
कृतसमुत्सवमम्बरगामिभिः ॥ ६२ ॥

प्रविश्य निजमंदिरं समुदितः समं बंधुभि-
र्न्यवेदयदिदं वने सुतमसूत मे वल्लभा ।
ततोऽप्रकटगर्भिका विशतु सूतिगेहं मुदा
पुरं कुरुत खेचराः क्षणपरं परहारि च ॥ ६३ ॥

तथाकृतमशेषतः पुरमवेत्य विद्याधरै-
र्जिगाय भुवनं यथा परमसंपदासंगमात् ।
सुगुप्तिजनमोचनो विपुलदानतः पूजया
बभूव मुदयँन् जनान् खचरपुत्रजन्मोत्सवः॥६४॥

पूजां विधाय महतीं जिनमंदिरेषु
दानं च याचकजनाय भृशं वितीर्य ।
सार्द्धं तया परिजनेन च बाल एषः
प्रद्युम्न इत्यभिदधे खचराधिपेन ॥ ६५ ॥

इतिश्रीसिन्धुराजसत्कमहामहत्तमश्रीपप्पटगुरोः पंडितश्री–महासेनाचार्यकृते
प्रद्युम्नचरिते सर्गः चतुर्थः समाप्तः ॥ ४ ॥

---

१ प्रत्यक्षम् । २ भर्तृवाक्यम् । ३ कनकमालया । ४ निजदेशं । ५ विद्याधरैः । ६ अतिमनोज्ञां वा परम मनोहरं । ७ हर्षयन् । ८ दत्वा । ९ कृतवान् । १० कालसंवरेण ।

# पंचमः सर्गः ।

संपत्पदे[1] त्रिदशवाससमानसारे
कामे[2]भिनंदति गृहे खचराधिपस्य ।
वाले हृतेऽथरिपुणा हरिवल्लभायाः[3]
वृत्तं वदामि विविधाद्भुतकारि लोके ॥ १ ॥

सुप्तोत्थिता हरिवधूः कलहंसनादा
तल्पं[4] तनूज[5]रहितं सहसा विलोक्य ।
इत्थं ब्रवीति परिवारमशेषमाशु
क्वासौ सुतः कथयमामपहाय यातः ॥ २ ॥

माया नु किं सुरकृता किमुतेन्द्रजालं
स्वप्नोऽथवा किमु दृशौ तिमिरं जजृंभे ।
चित्तं विकार मम किंतु हतोऽथ वालः
केनाऽपि पूर्वभववैरिकृता सुरेण ॥ ३ ॥

किं चेटिकाकरसरोरुहसंगतो वा
किं धातृकापृथुपयोधरपानलुब्धः ।
एवं विधं वहु विधाय विकल्पजालं
मूर्च्छामवाप्य समभूत्क्षणनष्टचेष्टा ॥ ४ ॥

दैवेन[6] सा प्रतिहतेव सुदारुणेन
भूमौ पपात सहसा प्रविकीर्णकेशा ।
वोधंगता परिजनेन कृतोपचारा
वक्षो जघान च रुरोद च मुक्तकंठं ॥ ५ ॥

---

१ संपदास्थाने। २ इच्छिते। ३ रुक्मिण्याः। ४ शय्यां। ५ पुत्ररहितम्। ६ कर्मणा।

हा बाल हा कुटिलकुंतल हा सुनास[1]
हा पूर्णचन्द्रमुख हा शतपत्रनेत्र[2] ।
हा कामपाशसमबंधुरकर्णपाश,
हा हारिकंबुगल[3] हा दृढबाहुशीर्ष ॥ ६ ॥

अन्तःपुरे हरिवधूरुदितं निशम्य
पौराः सुदुःखमरुदन्विदितार्थतत्त्वाः ।
सास्त्रैः समं यदुगणैः सपुरंध्रिवर्गैः
बाष्पाम्बुबिंदुनवसूत्रिततारहारैः ॥ ७ ॥

आकस्मिकं मुरजिद[4]श्रुतपूर्वमेवं
श्रुत्वा विलापमथभीतिकरं जनस्य ।
कोलाहलः किमयमत्रनिशांन्त[5]मध्ये
हाहेति गर्भमथ पार्श्वचरान[6]पृच्छत् ॥ ८ ॥

आदेशमेवमुपलभ्य[7] गतोऽथवेत्री[8]
शुद्धांत[9]मादृतमनास्त्वरितं प्रविश्य ।
विज्ञाय तत्त्व[10]मखिलं विनिवृत्य वेगा—
न्नत्वा स दुःखमवदच्च यथैव वृत्तं ॥ ९ ॥

तद्वज्रपातसममस्य वचो निशम्य
मूर्च्छामवाप गुरुदुःखभरेण भूपः ।
पार्श्वस्थितैः प्रणयिभिर्विहितोपचारः
संज्ञामवाप्य परिदेवन[11]मातताना[12] ॥ १० ॥

किं जीवितेन मम पुत्र विना त्वयाद्य
किं राज्य[13]कोशहरिसामजसद्गणेन ।

---

१ सुनासिक । २कमलनेत्र । ३ मनोज्ञशंखग्रीव । ४ विष्णुः । ५ अन्तःपुरमध्ये । ६ समीपवर्तिभृत्यान् । ७ प्राप्य । ८ द्वारपालः । ९ अंतःपुरम् । १० वृत्तांतं । ११ रोदनं । १२ विस्तारयामास । १३ राज्यकोपतुरगगजश्रेष्ठसमूहेन ।

किं खेटकर्वटमटंवचयेन[1] लोके
किं मंडलीकनिवहेन सुमंडलेन ॥११॥

हा मां गतोसि गतपुण्यगणं विना त्वं
दीनं सुदुःखिततरं तरसा विहाय ।
हा हा क्व पुत्र विलपंतमलं सकष्टं
तातं निजं निजकुलाब्जपतंग[2]मुद्यम्[3] ॥ १२ ॥

हा तात हा यदुकुलार्णवपूर्णचन्द्र
हा सुन्दरावयव हा कलहंसनाद ।
हा वत्स बांधवमनोम्बुजराजहंस
यातः क्व पुत्र गुणमंदिर मां विहाय ॥ १३ ॥

एवं विधं स विलपन् सह बन्धुवर्गैः
वाष्पाम्बुदं त्रुटितनिस्तुलतारहारम् ।
धुन्वन् शिरः परिवदन् बहुधा च धात्रे[4]
पद्भ्यां जगाम दयितांतिकमाकुलात्मा ॥ १४ ॥

आलोक्य तं सुवदना तरलायिताक्षी
शोकाकुलापि सहसैव पुनर्मुमूर्च्छ ।
दृष्टे जने सति सुदुःखसखे जनस्य
शोको हि नाम परमां नवतां[5]मुपैति ॥ १५ ॥

तन्वी स्वयं मुरजिता[6] करपंकजाभ्यां
उत्थापिता मलयजादिरसेन सिक्ता ।
पूर्णं नभो विदधती करुणस्वनेन
मूर्च्छां विहाय हरिणा सह सा रुरोद ॥ १६ ॥

शोकाकुलं विलुलिताखिलकेशभारं
म्लानाम्बुजप्रतिममाननमुद्वहंतम् ।

---

१ ग्रामहाटान्वितनगरदेशसमूहेन । २ स्वकुलकमलसूर्यं । ३ उद्गतं । ४ कर्मणे । ५ नूतनत्वं । ६ कृष्णेन ।

वृद्धस्ततः सदयितं श्रुतधर्मशास्त्रै
वृद्धैः कृतानुमतिराह रथांगपाणिम् ॥ १७ ॥

ये चक्रिणो विजितखेचरभूमिपालाः
पट्खंडभूप्रणयिनीकरलब्धसौख्याः ।
तेऽप्यंतकेन कवलीकृतसत्त्वसाराः
नामावशेषपठिता भुवने विभान्ति ॥ १८ ॥

तीर्थाधिपा मुशलिनो मधुसूदनाद्याः
ये केऽपि सौर्यबलसत्त्वनिधानभूताः ।
तेऽपि द्विपेन्द्ररथवाजिकृतात्मरक्षाः
कीनाशदंतदलिताः निधनं प्रयाताः ॥ १९ ॥

एवं कृतान्तपरिणाममुपेन्द्र मत्वा
शोकं विमुञ्च परितापकरं समस्तं ।
शोकाकुले हि जगतां त्वयि भर्त्तरीत्थं
लोकः प्रयातिविकलत्वमशेष एषः ॥ २० ॥

प्रायेण यादवकुले महति प्रसूतः
सौभाग्यवानतुलबाहुबलश्चिरायुः ।
क्वापीह तिष्ठति सुतस्तव शार्ङ्गपाणे
कालान्तरेण समवाप्स्यसि तेन योगं ॥ २१ ॥

शोकं विहाय वचसा सचिवस्य शौरि
लोलालकाकुलमुखीं दयितामुवाच ।
दीर्घायुषो न मरणं हरणायिताक्षि
राकाशशांकवदनेऽपहृतस्तनूजः ॥ २२ ॥

ही मत्प्रमादवशतो हृत एव बालः
केनापि पूर्वभववैरनिबंधनेन ।

---

१ रुक्मिणीसहितं । २ कृष्णं । ३ यमेन । ४ यमदंतचर्विताः । ५ पुत्रेण । ६ नारायणः । ७ चंचलकेशव्याप्तमुखीं । ८ खेदसूचकमव्ययम् ।

अन्विष्य तं सुवदने महताग्रहेण
मुग्धे त्वदङ्कगतमेव पुनः करोमि ॥ २३ ॥

कृष्णाहिभीषणसितोग्रकृपाणपाणीन्
दुर्भेद्यकंकट[1]भृतस्तुरगाधिरूढान् ।
शूरान्भटान्विदितवंशकुलावलेपा-
नन्वेषितुं प्रतिदिशं विससर्ज शौरिः ॥ २४ ॥

अन्वेष्य मंडलमशेषममी मनुष्याः
प्रत्यागता विफलयानविलुप्तशोभाः ।
स्वामिक्रमौ सविनयं प्रणमंति खिन्ना
देवेति विज्ञपयति प्रतिहारपालः[2] ॥ २५ ॥

पुत्रस्य तद्वदनपंकजमिद्ध[3]कान्ति
यावत् स्मरन्नृपसुतासहितः स तस्थौ ।
तावत्सशोकमुरजिद्विगतोत्सवां तां
द्वारावतीमवततार मुनिर्नभस्तः ॥ २६ ॥

पृष्ट्वाथ कंचन ततः सकलं विदित्वा
तस्मान्मुनिः परमशोकभरार्त्तमूर्तिः ।
सद्यो बभूव गुणदोषविवेकशून्यः
शोकाभिभूतवदनो हरिमाससाद ॥ २७ ॥

स्थित्वा क्षणं हरिमुवाच वचो विशुद्धं
स्याद्वादगर्भमतुलं जिनदेवगीतम्[4] ।
शोकं निवार्य निजबोधबलेन तीव्रं
स्वस्यापि नारदमुनिः सकलार्थवेदी ॥ २८ ॥

यो गेहवासमपहाय वनं प्रयातो
धन्यो जनो जगति वीतसमस्तमोहः ।

---

1 कवचधृतान् । 2 द्वारपालः । 3 दीप्तच्छवि । 4 सर्वज्ञोपदिष्टं ।

नूनं न पश्यति स एव वियोगदुःखं
पुत्रे हृते च रिपुणा सहसा मृते च ॥ २९ ॥

आलोक्य माधव तवाद्य सुदुःखमेवं
मन्ये स्वजीवितम[1]पेतफलं नि[2]कामम्।
को नाम बांधवम[3]सातगतं विलोक्य
संतोषमेति मतिमानकृतोपकारः ॥ ३० ॥

संत्यज्य माधव जनं प्रविहाय लक्ष्मीं
देशव्रतानि परिगृह्य विशोध्य दृष्टिम्।
शोकी तथापि तव शोकवशेन जातः
स्नेहोथवा भवति बंधनिमित्तमेव ॥ ३१ ॥

त्वद्दुःखतः परमदुःखमुपैमि नूनं
तस्माद् विमुञ्च मधुसूदन दुःखजालम्।
कोऽन्यो विमोचयति पुत्रवियोगदुःखा-
त्त्वां दे[4]वमंत्रिसदृशोपि विशुद्धबुद्धे ॥ ३२ ॥

शास्त्राणि वेत्सि सकलानि तथैव धर्मं
त्वं दुःखनोदमपरस्य करोषि जंतोः।
ते[5]न त्वमेव नुद शोकमथात्मनो हि
किं दीयते दि[6]नकृते रुचये प्रदीपः ॥ ३३ ॥

शोकापनोदमथ त[7]स्य नृपस्य कृत्वा
श्रीरुक्मिणीगृहमवाप मुनिः सदुःखम्।
तद्दर्शनादभिमुखं सहसोत्थिता सा
सिंहासनं कनकरत्नमयं विमुच्य ॥ ३४ ॥

इत्थं सदुःखमरविन्दसमाननेत्रा
पादाब्जयोरुपरि सा पतिता रुरोद।

---

१ निष्फलम्। २ अत्यर्थं। ३ दुःखप्राप्तं। ४ बृहस्पतिसमानः। ५ पूर्वोक्तकारणेन। ६ सूर्याय। ७ कृष्णस्य।

पुत्री सुतं जनक हा[1] छलतो मुषित्वा
केनापि दुःखजलधाविति पातितास्मि ॥ ३५ ॥

निःश्वस्य दीर्घमिति शोकभरेण वाढं
शोकाकुलोपि मुनिरेवमुवाच धीरम् ।
उत्तिष्ठ पुत्रि कुरु मा शुचमेवमुच्चै-
र्नष्टं मृतं च सुधियो न हि शोचयन्ति ॥ ३६ ॥

नेदं तवैव भुवि भूतमभूतपूर्वं
दुःखं तनूजविरहोत्थितमद्य पुत्रि ।
साधारणं भवभृतां तदशेषमेव
तस्मिन् करोषि किमु शोकमसातहेतुम्[2] ॥ ३७ ॥

भूपाः पुराणपुरुषा बहवः कथासु
भामंडलप्रभृतयः स्मृतपूर्ववैरैः ।
मायाविवैरिनिवहैरपहृत्य नीताः
सत्संपदा निजगृहं पुनरागताश्च ॥ ३८ ॥

एवं तदीयमधिगम्य वचो विशोका
रुक्मिण्यवोचत मुनिं मृगशावनेत्रा ।
तातस्त्वमेव भगवन् जननी त्वमेव
त्वत्पादपद्मरजसा विरजीकृतास्मि[3] ॥ ३९ ॥

यावन्मनो गुणगणस्मृतिमेति तात
तावत्तदीयमुखमेव पुरःस्थितं वा ।
पश्यामि दग्धहृदयानिशर्माधिकारि[4]
ग्रीष्मे यथा मृगगणो मृगतृष्णिकांभः ॥ ४० ॥

एवं वदन्त्यभिदधे मुनिनेति वाला[5]
शोकं विमुंच तनये सुतमानयामि ।

---

१ हा इति विषादसूचकमव्ययं । २ दुःखकारणम् । ३ निष्पापीकृतास्मि । ४ मनस्तापकारि । ५ आश्वासिता ।

कार्यं विनाखिलभुवं भ्रमता मयाद्य
किं खिद्यते तव सुतस्य विमार्गणायां[1] ॥ ४१ ॥
ऊचे मुनिं न सुखतो मम पुत्रवार्त्ता
लभ्या यतो भटशतैर्बहुभिः समस्तैः ।
भूमंडलेपि मृगयद्भिरसौ न दृष्ट-
स्तस्मात्त्वदुक्तमिति मंगलमेव भूयात् ॥ ४२ ॥
तां नारदः पुनरवोचत दीनवक्त्रां
बाले वृथा मम वचांसि सुतं त्वदीयम् ।
नीतं खलेन रिपुणा यदि नानयामि
तस्मात्समाश्वसिहि पुत्रि विमुंच शोकम् ॥४३॥
कंसानुजो यतिरभूदतिमुक्तनामा
लोकत्रयं करतलामलवद्विदित्वा ।
सिद्धिं गतः स हतदारुणकर्मशत्रु-
र्नैमित्त्रिबोधसहितोपि न वक्ति किंचित् ॥ ४४ ॥
गंतास्मि पुत्रि लघु पूर्वविदेह[2]वास्यं
सीमंधरं जिनपतिं प्रणिपत्य पृष्ट्वा ।
ज्ञात्वा तनूजचरितं पुनरेमि तस्मा-
दाश्वासनाय नियतं तव भीष्म[3]पुत्रि ॥ ४५ ॥
संभाष्य भूपतिसुतामिति सूक्तवाचा
दूरं पतंगपदवीं[4] पुनराससाद ।
ऊर्ध्वाननैः पुरजनैः परिदृश्यमान-
स्तावद्गतो नभसि यावदसौ न दृष्टः ॥ ४६ ॥
मेरौ विधाय कृतिकर्म[5] जिनालयेषु
नत्वा स चारणमुनीन् गुरुभक्तिपूर्वम् ।

---

१ गवेषणायाम् । २ विदेहस्थानम् । ३ रुक्मिणि । ४ सूर्यमार्गमाकाशं ।
५ सामायिकादिक्रियाः ।

तद्रामणीयकभृतोपि मुनिः सुराणां
श्रीपुंडरीकनगरं समवाप वेगात् ॥ ४७ ॥

तीर्थाधिपाः सुरकिरीटनिघृष्टपादाः
षट्खंडभूमिपतयो मधुसूदनाद्याः ।
संपत्पदं यदधुनापि विभूषयन्ति
किं वर्ण्यतेऽस्य नगरस्य सनातनस्य ॥ ४८ ॥

तस्मिन् ददर्श सरणं समवादि दूरात्
सीमंधरस्य मुनिरेष कृतप्रतिज्ञः ।
पूर्णं नृनाकिभुजगेन्द्रगणैरसंख्यैः
त्रैलोक्यमन्यदिव यन्मिलितं विभाति ॥ ४९ ॥

दृष्ट्वावतीर्य वियतो[1] मुदितः प्रविश्य
ब्रह्मांगभूरिति[2] नमस्तुतिमाततान ।
सीमंधरस्य नतनाकिकिरीटकोटि-
रत्नप्रभाच्छुरितपादसरोरुहस्य ॥ ५० ॥

माद्यन्मनोभवकरीन्द्रमृगाधिपाय
भव्याब्जखंडपरिबोधनभास्कराय ।
नम्रामराधिपशिरश्च्युतपारिजात-
मालारजोरुणितपादसरोरुहाय ॥ ५१ ॥

मोहान्धकारपटलैकनिशाकराय
संसारकाननसुदीप्तदवानलाय ।
निर्वाणपादपफलैकरसायनाय
स्याद्वादगर्भवचनाय नमो जिनाय ॥५२॥ युग्मम्

स्तुत्वेति मानवसमाश्रितभूमिभागे
गत्वा स्थितं सदसि चक्रधरो ददर्श ।

---

१ आकाशात् । २ नारदः ।

दृष्ट्वा च तं मनुजमूर्तिमदृष्टपूर्वं
धुन्वन् शिरः सपदि विस्मयमाजगाम ॥ ५३ ॥

देव त्वया निगदिता गतयश्चतस्र-
स्तासामियं परिणतिः[1] कतमा गतीनाम् ।
भूपेंद्र मानवगतेर्भरतोद्भवायाः
प्राप्तो नरोऽयमिति तत्र जगौ जिनेन्द्रः ॥ ५४ ॥

कस्माद्विलंघ्य मनसाप्यविलंघनीयं
देशान्तरं किमिति देव समागतोऽयम् ।
किं कार्यशेषमधिकृत्य च कस्य पार्श्वे
पृष्टो रथांगपतिना[2]इति जगाद देवः ॥ ५५ ॥

वास्यादयं[3] विदितभारतनामधेया-
दन्वेषणाय हरिराजशरीरजस्य ।
प्रेमानुबंधविवशो जगतीं विमार्ग्य
वार्तामवाप्तुमित एव समागतोऽयम् ॥ ५६ ॥

तत्तादृशं समवलोक्य रथाङ्गपाणिः
स्थैर्यं च विस्मयवशेन निरस्य दूरम् ।
कृत्वा च तं करतले दशचापमानं[4]
कोदंडपंचशतमूर्तिरवोचदेवम्[5] ॥ ५७ ॥

कोऽयं हरिर्वदति चक्रधरो जिनेन्द्रं
स्थैर्यं किमस्य सदनं क किमस्य गोत्रम् ।
कास्ते सुतोऽस्य स समेष्यति कुत्र काले
किं चास्य नाम मम हस्ततले स्थितस्य[6] ॥ ५८ ॥

श्रीमान् जिनः कथयतिस्म कथां विचित्रां
भूपस्त्रिखंडपतिरुन्नतयादवेन्द्रः ।

---

१ परिणामः । २ चक्रवर्तिना । ३ क्षत्रात् । ४ दशधनुषःप्रमाणं नारदं । ५ पंचशतधनुःप्रमाणमूर्तिश्चक्रवर्ती । ६ नारदस्य ।

द्वारावती वसतिरुज्ज्वलवंशकेतु-
स्तस्य प्रिया मृगदृशी नृप रुक्मिणीति ॥ ५९ ॥
वांछामि वांछितमनोरथकल्पवृक्ष
श्रोतुं जिनेश्वर हरेस्तनयस्य वृत्तम् ।
देव प्रसीद कथयेति कुरु प्रसादं
विज्ञापिते कथयितुं पुनरारभेत ॥ ६० ॥

भूपोस्ति यादवकुले हरिरुन्नतश्रीः
श्रीरुक्मिणीतनुभवोस्य बभूव सूनुः ।
संस्मृत्य पूर्वभववैरमरातिनाऽथ
नीतश्च तक्षकशिलापिहितश्च चक्रे ॥ ६१ ॥

श्रीकालसंवरनृपः प्रियया समेतो
विद्याधराधिपतिराप च तं प्रदेशम् ।
बालं विलोक्य परिगृह्य पुरं निनाय
तस्मिन्नवर्द्धत शशीव कलाभिरामः ॥ ६२ ॥

प्रद्युम्न इत्यभिधया प्रथितः पृथिव्यां
लाभैः शुभैस्तदनु षोडशभिः समेतः ।
संवत्सरैरपि समेष्यति तत्प्रमाणै-
र्विद्याद्वयं समुपलभ्य पितुः पुरं सः ॥ ६३ ॥

तस्मिन् समागतवति क्षितिपाल तस्या[1]-
स्तन्ये भविष्यति वने[2] शुभशंसि[3] सर्वम् ।
उन्निद्रपंकजवना गृहदीर्घिकाः स्यु-
र्मूलादशोकतरवो निचिताश्च गुंछैः ॥ ६४ ॥

बालैर्दलैर्युगपदाकुलितास्तमाला
गंधान्धषट्चरणचक्रचिताश्च चूताः ।

---

१ रुक्मिण्याः । २ उपवने । ३ शुभसूचकम् ।

अन्येपि तत्र तरवो समयं विलंघ्य
सर्वर्तुभिः कृतपदाः सहसा भवेयुः ॥ ६५ ॥

मूक्यो विचित्रवचनाः सरलाश्च कुब्जाः
काण्योपि तत्र सहसैव मृगायताक्ष्यः ।
किंचिद्विसूत्रितसमुद्धृतवर्हभाराः
केकामुखा रचितचित्रपदा मयूराः ॥ ६६ ॥

योऽयं त्वया करतले कलितो नरेन्द्र
मान्यो मुनिर्जगति नारदनामधेयः ।
निर्वाणमार्गकुशलो नवमो यतात्मा
देशव्रती हरिहिताय समागतोत्र ॥ ६७ ॥

नत्वा जिनं पुनरवोचत चक्रवर्ती
देव प्रसीद वद माधवसंभवस्य ।
वैरस्य कारणमुदारविचेष्टितस्य
जन्मान्तराणि च रिपुं च शुभाशुभं च ॥ ६८॥

पृष्टो नरेन्द्रपतिनेदमुवाच देवो
द्वीपेत्र भारतमनंतगुणं यदस्ति ।
भूपाल पुण्यजनताविहिताधिवासो
देशोऽस्ति तत्र मगधेति जगत्प्रसिद्धः ॥ ६९ ॥

ग्रामोऽपि शालिपदपूर्वपदोस्ति तत्र
तस्मिंश्च सोमवदनः किल सोमदत्तः ।
विप्रो वभूव कुलजातिकृतावलेप[1]
आसीच्च तस्य दयिता कुलजाग्निलेति ॥ ७० ॥

पुत्रौ तयोः सकलवेदपयोधिपारं
यातावपि स्वकुलजातिवलाभिमानात् ।

---

१ कुलजातिकृताभिमानः ।

विश्वं जरत्तृणमिव प्रतिपद्यमानौ
नाम्नाग्निभूतिरितरोपि च वायुभूतिः ॥ ७१ ॥

मिथ्यादृशौ स्वमतपातितबाललोकौ
मिथ्यापदार्थपरिकल्पनपुष्टभावौ ।
तौ तिष्ठतो मुदितमानसवृत्ति याव-
त्तीर्थे जिनस्य वसुपूज्यसुतस्य[1] तावत् ॥ ७२ ॥

श्रीमाननंतगुणराशिरसंगपंको
निर्मूलिताघविटपी मदकुंभिसिंहः ।
जेता परीषहमहारिवरूथिनीनां[2]
सन्मार्गदर्शनरतो निरतो व्रतेषु ॥ ७३ ॥
श्रीनंदिवर्द्धनमुनिर्जितमारवीरो
गम्भीरवाग् विविधबोधविनिद्रनेत्रः ।
शिष्यैः समं विविधलब्धियुतैस्त्रियोगै-
स्तद्वाह्यनंदनभुवं समुपेयिवान् सः ॥७४॥युग्मम्

आपृच्छ्य रक्षकममुष्य वनस्य सक्तं
योगीश्वरोपि स विधाय विधिं यथोक्तम् ।
वेदीनिवेशितशिलाफलकं विविक्तं
तत्राप्यशोकतरुमूलमलंचकार ॥ ७५ ॥

आकस्मिकीं समवलोक्य वनस्य शोभां
तस्य प्रभावजनितां मुनिपुंगवस्य ।
संरक्षिणो सपदि विस्मितमानसास्ते
कृत्वा प्रदक्षिणमथैनमनंसिषुश्च ॥ ७६ ॥
ज्ञात्वागतं यतिपतिं जनता जगाम
श्रीमज्जिनेन्द्रपदपंकजषट्पदाली ।

---

१ वासुपूज्यनामकद्वादशतीर्थंकरस्य । २ महाशत्रुसेनानाम् ।

सद्योगिनेव हि शुभाशुभकर्मराशी
दुष्टाशयौ सपदि संत्यकिनेति रुद्धौ ॥ ८९ ॥

आगच्छतं वटुवराविह नः समीप-
मारण्यभीममहिषाविव चेष्टमानौ ।
कालुष्यतां किमु युवां नयथो वृथैव
श्रीनंदिवर्द्धनसरो यतिहंससेव्यम् ॥ ९० ॥

तद्वाक्यतः क्रुधमवाप्य यतेः सकाशं
तौ जग्मतुः सपथिकाभिरमुं[2] शपंतौ ।
निर्लज्ज रे मलिन रे श्रुतिमार्गवाह्य
शापं ददासि किमु संस्तववर्जितोपि ॥ ९१ ॥

विप्रौ यतिं पुनरिदं समवोचतां तौ
किं चाथवा निगदितैर्बहुभिर्वचोभिः ।
जेतासि नौ सदसि चेद्विदुषां समक्ष-
मावां त्वया शठ यथाभिहितौ तथैव ॥ ९२ ॥

अन्यच्च जल्पसमयेऽत्र पराजितस्य
को निग्रहो भवति निश्चयतो विधेयः ।
संप्राश्निकैर्वद[3] मुने सुविचार्य बुद्धया
यद्रोचते भवतु वामिति साधुनोक्तम् ॥ ९३ ॥

जेतावयोर्यदि भवान्नियतं व्रजाव-
स्त्वच्छिष्यतामथ कथंचन निर्जितस्त्वम् ।
निर्वास्यसे[4] विषयतः[5] सनिकारमस्मा-[6]
दित्यूचतुर्द्विजसुतावयमेव दंडः ॥ ९४ ॥

एवं विधाय विदुषां पुरतः प्रतिज्ञां
तेषु स्थितेष्विति परस्परसाभ्यसूयम्[7] ।

---

१ मुनिना । २ गालिभिः । ३ सभ्यजनैः । ४ निष्काश्यते । ५ देशतः ।
६ धिक्कारसहितं । ७ परस्परेर्ष्यासहितं ।

श्रुत्वा विवादमिति कौतुकतो जनौघ-
स्तं देशमाप्य विरलं[1] निबिडं[2] चकार ॥ ९५ ॥

इत्थं स्थिते सकलसभ्यजने सभायां
सत्प्राश्निकैर्निबिडवाक्यविचारदक्षैः[3] ।
श्रीसत्यकिः पटुवटू वदतिस्म पूर्वं
मां पृच्छतं यदिह नावगतं भवद्भ्याम् ॥ ९६ ॥

वाक्यं मुनेरिति निशम्य वटुद्वयी सा
दर्पोद्धुरा[4] स्मितपुरःसरमित्युवाच[5] ।
आवां प्रपूज्य परिपृच्छ यते त्वमद्य
कुत्रापि वस्तुविषये यदि संशयोस्ति ॥ ९७ ॥

एवं भवत्वथ कुतः समुपागतौ वां
दर्पोद्धताविति यतिः समवोचदेतौ ।
ग्रामादितोपि जड नौ समुपेयिवांसौ
त्वं चेन्न वेत्सि ननु वेत्सि न पुष्पदंतौ[6] ॥ ९८॥

ग्रामादितो विवदिषू द्विजसोमदत्त-
सूनू युवामिति न वेद्मि समागतौ किम् ।
नाम्नाग्निभूतिरितरोपि च वायुभूति-
रेतौ कुतः परभवादिति पृष्टमेतत् ॥ ९९ ॥

इत्थं निशम्य वचनं समवोचतां तौ
किं कोपि पूर्वभवविन्मनुजेषु मध्ये ।
संभाव्यते सदसि येन मुने विशंकां
संपृच्छसे परभवं शठ नौ त्वमेव ॥ १०० ॥

वित्थो[7] युवां न शृणुतं जनतासमक्षं
जन्मान्तरं द्विजसुतौ कथयामि पूर्वम् ।

---

१ जनरहितं. । २ संकीर्णं । ३ सघनवाक्यविचारकुशलैः । ४ मदोद्धता । ५ ईषद्धास्यपूर्वं । ६ दिवाकरनिशाकरौ ७ जानीथः ।

ग्रामेत्र विप्रकुलजोऽर्थपतिः प्रसिद्धः
क्षेत्राधिपः प्रवरनामधरो बभूव ॥ १०१ ॥

क्षेत्रेथ तस्य वटवृक्षसमीपदेशे
जातं शृगालयुगलं विधिसन्नियोगात् ।
वृद्धिं क्रमेण तदगात् कुणिपाशनेन
कालः कियानपि गतोत्र सुखेन तस्य ॥ १०२ ॥

क्षेत्रं गतेन सह कर्मकरैः कदाचित्
दूराददर्शि नभसि प्रवरेण मेघः ।
गर्जन्निरंतरगभीररवं सचापः
संतर्जयन्निव निदाघरिपुं स कोपात् ॥ १०३॥

सीत्कारवायुपरिकंपितविश्वलोके
वेगाद्विमुञ्चति जलं नववारिवाहे ।
सर्वं हलोपकरणं स विहाय तस्मिन्
कृच्छ्राज्जगाम भवनं प्रति वेपिताङ्गः ॥ १०४ ॥

वृष्टिर्बभूव निविडा दिवसानि सप्त
गोमायुयुग्ममथ तीव्रबुभुक्षयार्तम् ।
निःसृत्य गुल्मगहनाद्विरले च वर्षे
क्षेत्रे ददर्श सरसामिह चर्मरज्जुम् ॥ १०५ ॥

तत्तां जघास परया सहसा च गृद्ध्या
पीडां ततोपि महतीमधिसह्य शूलात् ।
प्रक्षिप्य दिक्षु चरणान् क्षणतोपि मृत्वा ।
जातौ युवां द्विजसुताविह दैवयोगात् ॥ १०६ ॥

---

१ प्रवरविप्रस्य । २ शृगालयुगलं । ३ मृतकभक्षणेन । ४ ग्रीष्मर्तु- । ५ हलसाधनं । ६ क्षेत्रे । ७ कम्पितशरीरः । ८ सान्द्रा । ९ शृगालयुग्मं. । १० स्तोके । ११ आर्द्रां । १२ भक्षयामास ।

प्रायेण जंतुरयमेव हि दुर्विदग्धो
नूनं स्वभुक्तमपि विस्मरतीह मोहात् ।
येनानयोरशुचिभक्षणपूर्वकं त-
न्निर्वेदकारणमभूदथ विस्मृतं च ॥ १०७ ॥

पापेन जातिकुलरूपयशःस्वभोग-
सौहित्यसौरभमतिद्युतिभिर्विहीनाः ।
पुण्येन सर्वसहिता मनुजा भवन्ति
जानन्निदं वहति जातिमदं न विद्वान् ॥ १०८ ॥

पूर्वौ भवो यदि न वां स्मृतिमेति विप्रौ
कुर्मस्ततः सकलसाक्षिमतां प्रतीतिम् ।
विप्रो मया निगदितः प्रथमं य[1] आसीत्
वृष्टेरनंतरमगान्निजसीमभूमिम् ॥ १०९ ॥

सर्वं हलोपकरणं स[2] ददर्श त[3]स्यां
क्षिप्तं प्रचण्डपवनेन समंततोपि ।
भुक्त्वार्द्रचर्म्म जठरार्तिकरं क्षणेन
सं[4]स्थं शृगालयुगलं तदनंतरं च ॥ ११० ॥

दृष्ट्वा क्षणं त[5]दतिनिर्घृणचित्तवृत्तिः
कृत्वा [6]दृती निजगृहं स निनाय कोपात् ।
मूकस्य चास्य भवने ननु तिष्ठतस्ते
नोचेद्[7]दृशो[8]र्विषयतां नयतं प्रगत्य ॥ १११ ॥

मूकोप्ययं परभवे प्रवराभिधानो
विप्रो हली समभवद्द्विजभक्तिसक्तः ।

---

१ यथासीदित्यपि पाठः । २ प्रवरविप्रः । ३ भूमौ । ४ मृतं । ५ मृतश्शृगालयुगं । ६ भस्त्रो । ७ नयनयोः । ८ गोचरतां ।

इष्ट्वा मखै[1]रपि यथासमयं सदापि
प्रेत्याभवन्निजसुतस्य सुतस्तथापि ॥ ११२ ॥

स्मृत्वा पुरातनभवं स परं विषादी
सूनुं पितेति जननीति निजै[2]स्नुषां च ।
वक्तुं नितान्तमहमत्र जिह्रेमि वाढं
मूकीवभूव मनसेति चिरं विचिंत्य ॥ ११३ ॥

कालेन यौवनमवाप दुरापमन्यैः
श्रुत्वावयोः कलकलं समगादिहासौ ।
तं प्राह सत्यकिमुनिर्द्विज मुंच मौनं
बन्धून् समाश्वसिहि हारिवचोमृतेन ॥ ११४ ॥

मातृत्वमेति तनया जनकः सुतत्वं
नाथोपि कर्मकरता[3]मिन[4]तां च सोपि[5] ।
जन्मान्तरे विधिवशादिति जन्मभाजा[6]-
मुद्वर्तनानि[7] शतशोपि भवंति भद्र ॥ ११५ ॥

एवं प्रबुध्य जनताहितधर्ममेकं
शीघ्रं कुरुष्व भवभीतिविघातहेतुम्[8] ।
येनान्यजन्मनि पुनर्न हि पश्यसि त्वं
दुःखं स्ववंधुपरिवर्तनकारणोत्थम् ॥ ११६ ॥

इत्थं मुनेस्तदभिनंद्य वचस्तदानीं
वाष्पाम्बुविन्दुनिकरं सततं विमुंचन् ।
मूकोऽवदत्तमथ मन्मथकुंभिसिंह[9]
दीक्षां प्रयच्छ[10] भगवन् भवनाशिनीं मे ॥ ११७ ॥

---

१ यज्ञैः—"अध्ययनं ब्रह्मयज्ञः स्याद्देवयज्ञः सुरार्चनं । भूतयज्ञो वलिः प्रोक्तः नृयज्ञोतिथिपूजनम् ॥ १ ॥ पितृयज्ञो भवेच्छ्राद्धं पूर्णिमादर्शयोरपि । 'एते पंच महायज्ञा नित्यं कार्या द्विजोत्तमैः॥२॥" २निजपुत्रवधूं । ३ किंकरतां । ४नाथतां । ५ किंकरोपि। ६शरीरिणां। ७परिवर्तनानि। ८भवभयनाशकारणकं। ९मुनिं १०देहि।

दीक्षोद्यतं समवलोक्य ततस्तमेके
सम्यक्त्वमापुरपरे तु महाव्रतानि ।
देशव्रतानि जगृहुः परमार्थतोन्ये
धर्मे रताः समभवन्निति भव्यसार्थाः[1] ॥ ११८ ॥

अत्रान्तरे समवलोक्य जनोपनीतं
गोमायुचर्मयुगलं जनतासमक्षम् ।
निस्तेजसावतितरां सहसा विलक्षौ
धिक्कारमाप्य च ततो गृहमापतुस्तौ ॥ ११९ ॥

दृष्ट्वा सुताविति जितौ पितरौ स कोपं
स्मित्वा[2] तदा परुषमित्थमवोचतां तौ ।
यत्पाठितौ बहुविधं द्रविणं प्रदाय
जातं तदद्य सकलं विफलं कुपुत्रौ ॥ १२० ॥

शास्त्रेण चेत्क्षपणकान् विदुषां समक्षं
जेतुं क्षमौ न हि युवां श्रुतिमार्गबाह्यान् ।
शस्त्रेण तर्हि निशि तान्विनिहत्य दुष्टा-
नागच्छतां द्रुतमिति प्रहितौ[4] पितृभ्याम् ॥ १२१ ॥

पित्रोरवाप्य च निदेशमलंघनीयं
तुष्टौ मिथो द्विजसुताविदमूचतुस्तौ ।
यन्नौ मतं गुरुजनस्य तदेव चेष्टम्
कृत्वा तदेव नियतं सुखिनौ भवावः ॥ १२२ ॥

एवं निवेश्य हृदये शितशस्त्रपाणी
पट्टीत्रिवेष्टकदृढग्रथितासिधेनू[5] ।
वामश्रुतिप्रणयिकल्पितजूटबंधौ
तौ जग्मतुर्वनभुवं[7] भगवान् स[6] यत्र ॥ १२३ ॥

---

१ भव्यसमूहाः । २ हसित्वा । ३ कठिनं । ४ प्रेषितौ । ५ छुरिका ।
६ सत्यकिमुनिः । ७ वने ।

तावच्च सोपि गुरुसन्निधिमाप्य सर्व-
मालोचतेस्म मुनिसत्यकिरातमदोषम् ।
दोषानुरूपमथ तस्य निरूप्य कृत्यं
प्राहान्य[1]दर्प्यहितवारणहेतु[2]मीशः ॥ १२४ ॥

अद्यैव विप्रतनयाविति दुष्टचित्तौ
हंतुं भवन्तमधिरात्रि विनिश्चयेन ।
तावेष्यतः क्षपितमानतया विलक्षौ
[3]मानक्षतौ भवति कस्य न [4]निर्घृणत्वम् ॥ १२५ ॥

तेन त्वमस्य मुनिपुंगवरत्नराशेः
रक्षार्थमाशु वनभूमिसमीपदेशे ।
गत्वा कुरुष्व [5]तनुमोक्षणमानिशायाः
क्षेत्राधिपाय विनिवेद्य विचारपूर्वम् ॥ १२६ ॥

आज्ञां गुरोः समभिनंद्य तथा स चक्रे
ताभ्यां [6]स तत्र ददृशे निशि निश्चलाङ्गः ।
प्रोक्तं [7]मिथः [8]सकलदुर्णयहेतुरेव
सोयं पुरो विधिवशादियम[9]िष्टसिद्धिः ॥ १२७ ॥

उक्त्वेति तौ [10]संविधमाप्य [11]समुद्यतासी
[12]ज्यायांस्तयो[13]रनुजमाह चिरं विचार्य ।
पूर्वं [14]तृणेढि [15]स च तं निजगौ तथैव
यावत्परस्परविवादमिति प्रपन्नौ ॥ १२८ ॥

ताव[16]द्वनाधिपतिना भ्रमता वनान्ते
यक्षेण तं युगपदेव निहन्तुकामौ ।

---

१ हितकारणं इत्यपिपाठः । २ गुरुः । ३ मानहानौ । ४ निर्दयत्वं । ५ कायोत्सर्गं । ६ सत्यकिमुनिः । ७ परस्परं । ८ सकलकुनीतिकारणः । ९ कार्यसिद्धिः । १० समीपं । ११ उद्यतखड्गौ । १२ ज्येष्ठः । १३ लघुं । १४ हिंधि । १५ अनुजः । १६ धनदेन ।

दृष्टौ तदा भृकुटिभीषणरूक्षनेत्रौ
तौ दुर्नयान्तकनिभौ निशि दुष्टचेष्टौ ॥ १२९ ॥
योगीश्वरः सकलसत्वहितः समानो
मित्रे तथा रिपुजने सुखदुःखयोश्च ।
कुर्वे न तस्य यदि रक्षणमद्य साधो-
र्नूनं वृथा भवति मे वनपालकत्वम् ॥ १३० ॥
सूर्योदये जनपदैः सह संप्रधार्य
कार्योऽनयोरतुलदुर्नययोग्य एव ।
दंडस्तदेति मनसातिविचार्य तौ च
संस्तंभ्य गुह्यकपतिश्च जगाम धाम ॥ १३१ ॥
दृष्ट्वोपसर्गमथ तस्य मुनेरुदारं
क्वापि क्षपा सरभसं समगाद् भियेव ।
प्रातश्च तौ समवलोक्य तथातिरौद्रौ
धिक्कारवादमुखरा जनता निनिन्द ॥ १३२ ॥
उत्खातचण्डकरवालकरौ रिपू तौ
स्तंभितौ परमनेन निहन्तुमिष्टौ ।
तस्मादयं सकलसत्वहितो मुनीनां
धर्मोऽधुना शरणमस्तु भवांतरे च ॥ १३३ ॥
इत्थं च तौ च समवाप्य जनाच्च निन्दां
पुत्रौ स्थितौ पितृयुगं समवेत्य लोकात् ।
बाष्पाम्बुबिन्दुघनमौक्तिकतारहारं
हाहा सुताविति कृतस्वनमाप तत्र ॥ १३४ ॥
साधोः क्रमाम्बुजयुगे पितरौ निपत्य
तौ तं समूचतुरधोमुखदीनदृष्टी ।
त्वं यच्छ सर्वजनतातिगपुत्रभिक्षां
यत्त्वन्मतं सकलसत्त्वहितं प्रतीतम् ॥ १३५ ॥

तावन्मुनिः सपदि पूर्णगृहीतयोगो
विस्मित्य किंचिदिव तत्क्षणमित्युवाच ।
यः प्रातिहार्यमकरोन्मम यक्षनाथः
प्रादुर्भवन्निह स मुञ्चतु विप्रपुत्रौ ॥ १३६ ॥

इत्युक्तवंतमथ तं स जगौ यतीन्द्रं
नाथास्व जोपमिह किं तव चिंतयेति ।
दोषं विना यदि जिघांसुरहं भवामि
युक्तं निवारयितुमत्र पुनर्न युक्तम् ॥ १३७ ॥

रुद्धौ मया निशि जनस्य निवेदनाय
माभूत्तवात्र भगवन् जनतापवादः ।
हन्तास्मि साम्प्रतमिमौ नियतौ मदान्धौ
हिंसेति सानुनयमेनमरुद्ध योगी ॥ १३८ ॥

अन्यच्च ते धनपते कथयामि भावी
मोक्षोऽनयोर्नियमतो जिननेमितीर्थे ।
श्रुत्वा वचो यतिपतेरिति तं प्रणम्य
विप्रौ प्रमुच्य धनदेन तिरोबभूवे ॥ १३९ ॥

गत्वा सुकौतुकजनेन विलोक्यमानौ
साधुं प्रणम्य विधिपूर्वमवोचतां तौ ।
नाथ क्षमस्व दुरनुष्ठितभावयोर्यत्
वालाय जातु न हि कुप्यति साधुलोकः ॥ १४० ॥

क्षांतिः कृता ननु मया जगतोपि विप्रौ
लोके स्वकर्मवशवर्तिनि नैप दोषः ।
कस्यापि कश्चन युवामपि किं विधत्तं
कर्मैव कारणमनर्थपरम्परायाः ॥ १४१ ॥

इत्यादि साधुवचनादुपलब्धतोषौ
वोधिं प्रपिच्छुमनसाविदमूचतुस्तौ ।

क्षान्तेः पदं गुणनिधिं तपसां प्रसूतिं
सर्वाङ्गलक्षणविभूषितमीक्षणेष्टम् ॥ १४२ ॥

आवां मुनेस्तव वपुः कथमीश हंतुं
निःकारणं व्यवसितावति दुष्टचेष्टौ ।
पुण्यं च तत्कथय नाथ परार्घ्यमुच्चै-
र्येनावयोस्तव जिघांसनपापमोक्षः ॥ १४३ ॥

सम्यक्त्वमुज्ज्वलमणुव्रतपंचकं च
शिष्या गुणव्रतमनूनमिदं हि पुण्यम् ।
श्रुत्वेति देशयतिधर्ममनेकभेदं
नत्वा मुनिं जग्रहतुस्तमिमौ यथावत् ॥ १४४ ॥

श्रुत्वा प्रणम्य च पुनः पुनरेव साधुं
धर्मामृताम्बुनिधिमज्जनमाप्य तुष्टौ ।
कुप्यद्भिर्निंददतितुष्यदशेषलोकै-
स्तावीक्षितौ गृहमभीयतुरुत्कबंधू ॥ १४५ ॥

श्रीमज्जिनेन्द्रचरणाब्जरजःपवित्र-
मूर्द्धास्त सोदरयुगं चिरमात्मगेहे ।
मिथ्यात्वकर्मवशगौ पितरौ तथास्तां
काले प्रयाति पितृयुग्ममवोचदित्थम् ॥ १४६ ॥

हे बालकौ श्रुतिपथप्रतिपन्थिभूतं
किं साम्प्रतं जिनमताश्रयणं विधातुम् ।
नूनं गुरुद्वयममार्गरतं नितांतं
जोषं स्थिताविति विचिन्त्य सुतौ तदानीम्॥१४७॥

देशव्रतानि परिपाल्य विशुद्धदृष्टी
दानं चतुर्विधमनेकविधिं च दत्वा ।

---

१ युक्तम् ।

कृत्वा जिनेन्द्रभवनेषु चिरं सपर्यां
　　संन्यासमाप्य विधिना दिवमापतुस्तौ ॥ १४८ ॥
तत्रोपपादशयने सुखजन्म लब्ध्वा
　　संगीतमुत्तममवेक्ष्य सुरांगनानाम् ।
तौ विस्मितौ किमिदमद्भुतमाधिपत्यं
　　शय्याविमानपरिवारसुखादि चैतत् ॥ १४९ ॥
स्मृत्वा प्राग्भवमार्हतव्रतफलं ज्ञात्वावधिज्ञानतः
　　सौधर्मेन्द्रसभोत्तमौ सुरवरौ तौ पंचपल्यस्थिती ।
सम्यक्त्वं प्रतिपद्य तुष्टमनसौ कल्याणिनामर्हतां
कुर्वाणौ महिमानमुत्तमतमं भक्त्या चिरं तिष्ठतः ॥१५०॥

इतिश्री सिंधुराजसत्कमहामहत्तमश्रीपप्पटगुरोः पंडितश्रीमहासेनाचार्यस्य कृते प्रद्युम्नचरिते पंचमः सर्गः समाप्तः ॥ ५ ॥

## षष्ठः सर्गः ।

---

अस्त्यत्र भारते वर्षे कौशलाविषयो महान् ।
स्वच्छाप्सरःसमाकीर्णः स्वर्गलोक इवापरः ॥ १ ॥
भांति सत्तिलका यत्र सांजना मदनान्विताः ।
सालकाननशोभिन्यः कामिन्य इव वाटिकाः ॥२॥
न्हदा यत्र विराजन्ते सहस्रांबुजलोचनाः ।
शक्रा इव भुवं प्राप्ता देशसंपद्दिदृक्षया ॥ ३ ॥
स्वस्थानि बहु सत्त्वानि गंभीराणि स्थिराणि च ।
सरांसि यत्र राजन्ते मनांसीव महात्मनाम् ॥ ४ ॥
हंसस्वनाः सरोजास्या गम्भीरावर्तनाभयः ।
चक्रवाकस्तना यत्र शोभन्ते सरिदङ्गनाः ॥ ५ ॥
पुंड्रेक्षुवाटसङ्कीर्णाः सत्फलानम्रशालयः ।
चरन्गोधनसीमानो ग्रामा यत्र मुदे नृणाम् ॥ ६ ॥
निःकलंकः सुवृत्तोपि कलावानपि न क्षयी ।
सुधामयोपि निर्दोषो यज्जनोऽपूर्वचन्द्रमाः ॥ ७ ॥
अयोध्यानगरी तत्र यथा दिव्यमरावती ।
सुरसार्थेन संपन्ना भाति भव्यसुरालया ॥ ८ ॥
यत्सौधशिखरारूढसुन्दरीवदनेन्दुभिः ।
ध्वस्ते तमसि भेदोस्ति न शुक्लेतरपक्षयोः ॥ ९ ॥
हर्म्याग्रस्थाङ्गनागीतिहृताङ्कहरिणो विधुः ।
तत्सुखस्योपमानत्वं यस्यामायाति पार्वणः ॥ १० ॥
यत्रेन्दुमणिसोपानस्रुताच्छजलपूरिता ।
क्रीडावाप्यः प्रियायूनां यामिन्यां कुमुदोज्ज्वलाः ॥ ११ ॥

प्रातर्यत्र मुखे स्त्रीणां मुञ्चन् पद्मधिया करान् ।
नेत्रोत्पलकचध्वान्तसंगमाप नवं रविः ॥ १२ ॥
तत्रारिंजयनामासीदन्वर्थः पृथिवीपतिः ।
चकार करिणीं गां यः प्रस्नुतामनघैर्गुणैः ॥ १३ ॥
मातङ्गसङ्गसक्तोपि भुंजानो मेदिनीमपि ।
स्त्रीमनोनेत्रचौरोपि स तथापि सतां मतः ॥ १४ ॥
गुणोन्नतिं करोत्येष द्वेष्टि चास्मान्निरंतरम् ।
इति क्रुध्द्वेव यो दोषैर्मुमुचे प्राकृतैरपि ॥ १५ ॥
येन कल्पद्रुमेणेव वितीर्णा संपदर्थिनाम् ।
चिंतामणिसमाजाताः प्राप्य तां तेऽपरार्थिनाम् ॥ १६ ॥
प्रियंवदा प्रिया तस्य बभूव गुणशालिनी ।
रोहिणीव शशाङ्कस्य सती प्रीतिकराभिधा ॥ १७ ॥
श्रेष्ठी समुद्रदत्तोस्य पुण्यपण्योऽभवत्सुधीः ।
मणिवत्सुगुणाधारः शुद्धवंशसमुद्भवः ॥ १८ ॥
शङ्कादिदोषनिर्मुक्तो रत्नत्रयविभूषितः ।
देशव्रतविशुद्धात्मा सर्वागमविशारदः ॥ १९ ॥
तत्प्रिया हारिणीत्यासील्लावण्यजलदीर्घिका ।
सद्वंशा सद्गुणा नम्रा कामकोदण्डयष्टिवत् ॥ २० ॥
सौधर्मादेत्य गीर्वाणौ द्विजोत्तमचरौ तयोः ।
समभूतां सुतौ धर्माद्बन्धुराजीव भास्करौ ॥ २१ ॥
पूर्णभद्रस्तयोराद्यो माणिभद्रस्तथापरः ।
कलाकलापसम्पन्नौ पूर्णचन्द्राविवापरौ ॥ २२ ॥
स्वकुलोचितसम्बंधौ कृतदारपरिग्रहौ ।
जातौ तौ यौवनारम्भे जननेत्रमहोत्सवौ ॥ २३ ॥
कंचित्कालं रतौ धर्मे पुनरर्थे च सादरम् ।
भोगासक्तौ च तावेवं गतं कालं न जज्ञतुः ॥ २४ ॥

अन्यदा तत्पुरोद्यानं महेन्द्रः सूरिरायया ।
दत्तार्घ इव यो वृक्षैः सत्फलप्रसवाङ्कुरैः ॥ २५ ॥

प्रभावाद्यतिनाथस्य सर्वर्तुभिरलंकृतम् ।
वनपालस्तदालोक्य विस्मितोऽगान्नृपालयम् ॥ २६ ॥

प्रणम्य भूपतिं दूरात्प्रतीहारनिवेदितः ।
स पुष्पोपायनोपेतो वनपालो व्यजिज्ञपत् ॥ २७ ॥

स्वामिन्मधुव्रतव्रातझङ्कारबधिरीकृते ।
वने समागतः साधुर्भव्याम्भोरुहभास्करः ॥ २८ ॥

श्रुत्वेति वचनं तस्य राजा सन्तुष्टमानसः ।
सान्तःपुरः ससामन्तः स जगाम विवन्दिषुः ॥ २९ ॥

तथा निर्यान्तमालोक्य राजानं नगरीजनः ।
चचाल निखिलो नूनं लोको राजानुवर्तकः ॥ ३० ॥

अथोद्यानं समासाद्य त्यक्तराजपरिच्छदः ।
त्रिःपरीत्य तमीशानं नमश्चक्रे महीपतिः ॥ ३१ ॥

यथास्थानं निविष्टेषु भव्यलोकेषु भूपतिः ।
पप्रच्छेति मुनिं धीमान् कारणं बन्धमोक्षयोः ॥ ३२ ॥

मिथ्यात्वाविरती योगाः प्रमादा बंधकारणम् ।
कषायाश्च जिनैर्दृष्टाः केवलामललोचनैः ॥ ३३ ॥

अश्रद्धानं पदार्थानां जिनोक्तानां यथागमम् ।
तन्मिथ्यात्वं द्विधा तच्च स्वभावाग्राहिताश्रयम् ॥ ३४ ॥

तत्र स्वभावमिथ्यात्वमेकाक्षविकलाङ्गिनाम् ।
तदेवासंज्ञिनामेकं संज्ञिनां द्वितयं मतम् ॥ ३५ ॥

एकान्तः संशयो मूढो विपरीतश्चतुर्थकः ।
विनयाज्ञानभेदेन षोढेत्याग्राहितं भवेत् ॥ ३६ ॥

कालात्सर्वसमुत्पत्तिः स्वभावान्नियतेरपि ।
कर्मणो नरचेष्टातस्तदेवैकान्तिकं मतम् ॥ ३७ ॥

पदार्थान् भङ्गुरान् केचित् नित्यानेवापरे जगुः ।
जीवतत्त्वं विना चान्ये पक्षमेकान्तिकं स्मृताः ॥ ३८ ॥
शब्दप्रधानविज्ञानपुरुषाद्वैतवादिनः ।
पक्षमेकान्तमेतेऽपि लङ्घयन्ति न जातुचित् ॥ ३९ ॥
संशयादिकभेदा ये ज्ञेयास्तेऽन्वर्थनामतः ।
संक्षेपादिति मिथ्यात्वं तव भूप निवेदितम् ॥४०॥
वोध्यास्तु व्यासतो भेदा मिथ्यामोहस्य भूपते ।
परिणामकृता संख्या त्रिषष्टित्रिशती मता ॥ ४१ ॥
तथाविरतयस्तज्ज्ञैर्द्वादशात्र महीपते ।
योगाः पञ्चदश प्रोक्ताः प्रमादाश्चापि तत्प्रमाः ॥४२॥
पञ्चविंशतिसंख्यानाः कषायाश्च जिनोत्तमैः ।
वन्धस्य कारणं कृत्स्नमेतद्भूप निबुध्यताम् ॥ ४३ ॥
मोक्षोपि पार्थिवात्यन्तं विश्लेषो जीवकर्मणोः ।
दर्शनज्ञानचारित्रत्रयं तस्यापि कारणम् ॥ ४४ ॥
जीवादिसप्ततत्त्वानां श्रद्धानं दर्शनं मतम् ।
निसर्गाधिगमाज्जातं तत्सूत्रे दर्शनं द्विधा ॥ ४५ ॥
क्षयादुपशमाज्जातं कर्मणामुभयात्तथा ।
प्रत्येकं तद्द्वयं त्रेधा कथितं परमागमे ॥ ४६ ॥
सम्यग्ज्ञानं पदार्थानामवबोधः स पञ्चधा ।
मतिश्रुतावधिज्ञानं मनःपर्ययकेवलम् ॥ ४७ ॥
पापक्रियानिवृत्तिस्तु चारित्रं कथ्यते वुधैः ।
सामायिकादिभेदेन पञ्चधा तज्जिनागमे ॥ ४८ ॥
इत्थं संक्षेपतस्तस्य कारणं वन्धमोक्षयोः ।
निगद्य विरतः साधुः संतो हि मितभाषिणः ॥ ४९ ॥
कर्णाञ्जलिपुटैः पीत्वा सूरेस्तद्वचोमृतम् ।
प्रत्याह भूपतिः प्रीतः पुनस्तं मुनिपुङ्गवम् ॥ ५० ॥

यथापृष्टं मया ज्ञातं कारणं बन्धमोक्षयोः ।
प्रीतिश्च भंगुरा नित्यं संसारे सारवर्जिते ॥ ५१ ॥

देहो रोगशतापूर्णो यौवनं क्षणभंगुरम् ।
सुखं दुःखसमाक्रांतं विषया विषसन्निभाः ॥ ५२ ॥

विभाव्यैवं भवाम्भोधेर्निर्विण्णोस्मि महामुने ।
दीक्षयानुग्रहं कर्त्तुं तत्प्रसीद ममाधुना ॥ ५३ ॥

गुरोराज्ञां समादाय भूपो भूपतिभिः समम् ।
ममत्वं सर्वथा हित्वा दीक्षां जैनेश्वरीं श्रितः ॥ ५४ ॥

निवेश्यात्मपदे पुत्रौ वणिक्पतिरपि व्रती ।
वभूव सङ्गनिर्मुक्तस्तितीर्षुर्भववारिधिम् ॥ ५५ ॥

अत्रान्तरे मुनिं नत्वा धर्मं श्रेष्ठिसुतावथ ।
पपृच्छतुः गृहस्थानां सोऽप्यवादीद्दयार्द्रधीः ॥ ५६ ॥

पततो दुर्गतौ यस्मात्प्राणिनो धारयत्यसौ ।
तेनान्वर्थो जगत्येष धर्मः सद्भिर्निगद्यते ॥ ५७ ॥

आत्मवत्सर्वभूतानां दर्शनं तस्य लक्षणम् ।
स च द्विधा जिनैरुक्तः सागारेतरभेदतः ॥ ५८ ॥

तत्र सागारिणां धर्मः सम्यग्दर्शनपूर्वकः ।
व्रतशीलोपवासैः स्यात्साधुदानजिनार्चनैः ॥ ५९ ॥

मिथ्यात्वदोषतो नूनं नश्यत्येव स देहिनः ।
विषसङ्गाद्यथा शक्तिः सर्वावयवसंभवा ॥ ६० ॥

नष्टस्तु दुर्लभो नूनं रत्नं रत्नाकरे यथा ।
तस्मान्मिथ्यात्वमुत्सृज्य सेवध्वं धर्ममुत्तमम् ॥ ६१ ॥

स्वर्गसौख्यफलं स्वादु सर्वेन्द्रियसुखावहम् ।
धर्मद्रुमः फलत्येव सिक्तो दर्शनवारिणा ॥ ६२ ॥

भीमे रणाङ्गणे धर्मो दुर्भेद्यकवचायते ।
नाव्यते हि परं धर्मः पारावारे निमज्जताम् ॥ ६३ ॥

रुजन्ति न रुजो मर्त्यं धर्मभेपजपायिनम् ।
सन्नद्धमिव सङ्ग्रामे शितनाराचसंततिः ॥ ६४ ॥
धर्म्मपाथेयवान् भव्यः पान्थो नैवावसीदति ।
संसारकानने भीमे संसरन् सततं सुखी ॥ ६५ ॥
नास्ति धर्मात्परो वन्धुर्नास्ति मित्रं ततः परम् ।
स्वामी च तत्परो नास्ति तद्धर्मे कुरुतं मतिम् ॥६६॥
इति धर्मकथां श्रुत्वा गृहीत्वाणुव्रतान्यथ ।
सम्यक्त्वभूषितौ हर्षान्मुनिं नत्वा गृहं गतौ ॥ ६७॥
कुर्व्वाणावुत्तमां पूजां मन्दिरेषु जिनेशिनाम् ।
सत्पात्रेषु प्रयच्छन्तौ भक्त्या दानं चतुर्विधम् ॥ ६८ ॥
मनोभिवाञ्छितान् भोगान् भुञ्जानावथ लीलया ।
गतं न यज्ञतुः कालं निमग्नौ सुखसागरे ॥ ६९ ॥
अन्यदा वन्दितुं साधुं व्रजन्तौ पथि पश्यतः ।
शुनीसमेतचाण्डालं निकृष्टाकारचेष्टितम् ॥ ७० ॥
तथाविधेप्यतिस्नेहात्प्रीतं चित्तमभूत्तयोः ।
जातिस्मरः सदा यस्मादन्तरात्मा हि देहिनाम् ॥७१॥
गत्वाथ सन्निधौ साधुं प्रणम्यावधिलोचनम् ।
शुनीचाण्डालयोः प्रीतिरावयोः किमहेतुका ॥ ७२ ॥
सोऽब्रवीद्भवतोर्भद्रावभूतां पितराविमौ ।
अग्निलासोमदत्ताख्यौ तृतीये पूर्वजन्मनि ॥ ७३ ॥
वेदधर्मरतौ नित्यं यज्ञकर्मपरायणौ ।
परिग्रहाप्तवित्ताढ्यौ हिंसानन्दितमानसौ ॥ ७४ ॥
द्वेष्टारौ जिनमार्गस्य तस्थतुर्यौं भवद्गुरू ।
मन्वानौ जातिदर्पेण जगज्जीर्णतृणोपमम् ॥ ७५ ॥
प्रेत्य प्राप्तौ महादुःखं प्रथमं नरकावनिम् ।
पञ्चपल्यानि तस्यां च भुक्त्वा दुःखानि निर्गतौ ॥७६॥
सरमाश्वपचावेतौ ताविदानीं वभूवतुः ।
कुर्वाणौ भवतोः प्रीतिं जन्मान्तरसमुद्भवाम्॥ ७७ ॥

जैनमार्गतिरस्कारकालकूटविषद्रुमः ।
सिक्तो मिथ्यात्वतो येन फलत्येवाशुभं फलम् ॥ ७८॥
इति निश्चित्य सम्बन्धं मुनिवाक्येन तौ तयोः ।
दापयामासतुर्द्धर्म्मं प्रेमकारुण्यसंगतौ ॥ ७९ ॥
लब्धा धर्मं ततः श्रुत्वा पूर्वजन्मसुतादिकम् ।
शोकविस्मयपूर्णाङ्गो मातंगो मुनिमब्रवीत् ॥ ८० ॥
त्वत्प्रसादान्मया नाथ ज्ञातमात्मविचेष्टितम् ।
कृतं भुक्तं च यत्पूर्वं समं सरमयानया ॥ ८१ ॥
क्व जन्म तद्द्विजातीयं क्व च मातङ्गता शुनिः ।
इति संचिन्त्य चित्तं मे शोकेनातीव ताम्यति ॥ ८२॥
क्रोधशोकभयोन्मादमृत्युजन्मजरामयम् ।
संसरावो न संसारं पुनर्येन तथा कुरु ॥ ८३ ॥
इत्युक्त्वासौ गुरोर्वाक्यान् मासं संन्यस्य धीरधीः ।
नन्दीश्वरसुरो जातः पल्यायुः सुपरिच्छदः ॥ ८४ ॥
दिनानि सप्त संन्यस्य सरमा[1] सारमानसा ।
तत्पुरेनृपतेर्जाता कन्यका सुन्दराकृतिः ॥ ८५ ॥
निःशेषाहृतभूपाले तोषात्तस्याः स्वयम्वरे ।
दृष्ट्वा नन्दीश्वरो देवस्तामवादीत्सुलोचनाम् ॥ ८६ ॥
जन्मत्रयानुभूतं किं तद्दुःखं तव विस्मृतम् ।
क्रियते येन भोगेषु मनस्त्यक्त्वात्मनो हितम् ॥८७॥
इत्यादिपूर्ववृत्तान्तमाकर्ण्यासौ सुरोत्तमात् ।
प्रव्रज्यातीव संविग्ना कालेन च दिवं ययौ ॥ ८८ ॥
कथाप्रसङ्गतः प्रोक्तं तद्वृत्तमिह भूपते ।
प्रस्तुतं प्रोच्यतेस्माभिरिदानीं श्रेष्ठिपुत्रयोः ॥ ८९ ॥
अतिवाह्य समाः[2] काश्चिद्धर्मेण च सुखेन च ।
सल्लेखनां विधायान्ते सौधर्मकल्पमाश्रितौ ॥ ९० ॥

---

१ शुनी । २ वर्षान् ।

यथा वियत्यम्बुधराः समीरा माहेन्द्रचापान्यचिरद्युतिश्च ।
भवन्त्यकस्मात्परिपूर्णदेहास्तथोपपादे दिवि तावभूताम् ॥ ९१ ॥

सुकृतवशतो भूत्वा देवौ महर्द्धिविभूषणौ
सुरगिरिशिरश्चैत्यावासेष्वनुष्ठितवन्दनौ ।
त्रिदशवनितावक्त्राम्भोजप्रगल्भमधुव्रतौ
सुखमवसतां तस्मिन्नेतौ चिरं तु चिराकृती ॥ ९२ ॥

इतिश्रीसिन्धुराजसत्कमहामहत्तमश्रीपप्पटगुरोः पंडितश्रीमहासेनाचार्यकृते
प्रद्युम्नचरिते षष्ठः सर्गः ॥ ६ ॥

## सप्तमः सर्गः ।

---

पूर्वसूचितमनोज्ञजनान्ते कौशलेति नगरी रमणीया ।
हेमनाभ इति नाम नरेन्द्रः शास्ति तां दिवमिवामरनाथः ॥ १ ॥
कौमुदीव कुमदाकरबन्धोः पार्वतीव शशिखण्डधरस्य ।
विक्रमैकरसिकस्य मृगाक्षी धारिणी प्रियतमास्य बभूव ॥ २ ॥
यौवनोचितसुखानि यथेष्टं तेन सार्द्धमनुभूय नृपेण ।
स्वर्गतश्च्युतसुरद्वितयं सा तत्क्रमेण सुतयुग्ममसूत ॥ ३ ॥
तत्र पूर्वमकरोन्मधुसंज्ञं कैटभाख्यमितरं च नरेन्द्रः ।
रूपयौवनकलागुणपूर्णौ तौ समीक्ष्य समचिन्तयदेवम् ॥ ४ ॥
अन्वये महति जन्म नृपत्वं कांतिकीर्तिदयितास्तनयौ च ।
मर्त्यजन्मफलमाप्तमशेषं युक्तमात्महितमद्य विधातुम् ॥ ५ ॥
स्वं मधाविति निवेश्य स राज्यं कैटभं च विदधे युवराजम् ।
भोगसङ्गविमुखः सह देव्या शिश्रियेथ पदवीं श्रमणानाम् ॥ ६ ॥
तौ प्रतापमनुरागसुधांकं बिभ्रतावहितमित्रजनेषु ।
भूधराधिपशिरःकृतपादौ रेजतुः शशिदिवाकरतुल्यौ ॥ ७ ॥
अन्यदा भुवमवन्नवनीशः शुश्रुवानधिकृतादितिवार्ता ।
देशदाहजनितोरुनिकारो देवदुर्गमविशन्नृपभीमः ॥ ८ ॥
तन्निशम्य कुपितो नरनाथो भ्रूविभङ्गकुटिलारुणनेत्रः ।
भूरिसारबलरेणुभिराशाः पूरयन्नुपरि तस्य चचाल ॥ ९ ॥
दन्तिदन्तदलितद्रुमखण्डाः चक्रिचक्रविषमीकृतमार्गाः ।
तुङ्गवाजिखुरखण्डितशैलास्तद्बलैः पथि कृता वनदेशाः ॥ १० ॥
तं प्रयाणकवशादुपयान्तं वासरैः कतिपयैः स्वपुरान्ते ।
सेवितुं परिवृढं दृढभक्तिः प्राप काञ्चनरथःकनकाभः ॥ ११ ॥

स प्रणम्य च जगाद नृपेशं नः प्रसीद कुरु वेश्म पवित्रम् ।
स्थीयतां वटपुरे दिनमेकं दृश्यतां निजपदातिविभूतिः ॥ १२ ॥

सप्रसादमुपबुध्य कथञ्चित्प्रत्यपद्यत नृपः स तथेति ।
सोपि तत्क्षणकृतापणशोभं स्वं पुरं स्वयमवीविशदीशम् ॥ १३ ॥

वन्दिवृन्दकृतमङ्गलनादे तं गृहे रचितचित्रचतुष्के ।
जातरूपहरिविष्टरभाजं पर्यपूजयदसौ सकलत्रः ॥ १४ ॥

रूपनिर्जितरतिं तरलाक्षीं चन्द्रभासमिति रूढिमुपेताम् ।
तत्प्रियामथ विलोक्य स विद्धो मन्मथस्य विशिखैः सममेव॥१५॥

लोकरूढिरियमम्बुनिधेर्यत्पार्वणः समुदियाय शशाङ्कः ।
चक्रकांतिसरसीसृतमिन्दुं वेद्मि शीतकिरणं ध्रुवमस्याः ॥ १६ ॥

इन्दुना कुवलयैः शरकाण्डैः कम्बुपल्लवलताकरिकुम्भैः ।
स्वप्रदेशविनिवेशितशोभैर्निर्ममे ध्रुवमिमां परमेष्ठी ॥ १७ ॥

ईदृशी सुभगता न भवान्याः कांतिरीदृगपि नेन्दुकलत्रे ।
रूपमीदृगमरीषु न जातं किन्नरीषु वचनं च न हीदृक् ॥ १८ ॥

आननस्य विधुरम्बुजमक्ष्णोः कौमुदी स्मितरुचो मधुवाचः ।
वीक्षितस्य च सुधा कमलास्यादास्यमप्ययसमलाभममंस्त ॥ १९ ॥

कान्तवस्तुसमवायि विधातुः कौशलं परिणतिं गतमस्याम् ।
मन्मथातुरमनाः क्षितिपालस्तां विलोक्य समचिन्तयदेवम् ॥ २० ॥

जन्म तस्य सफलं स कृतार्थः पुण्यवान्स सुभगः सुकृती सः ।
यस्य निर्वृतिनिकेतनमेषा चिन्तयन्निति जगाम निवासम् ॥ २१ ॥

शून्यवच्छलितवन्मुषितो वा दग्धवन्मनसि तद्विरहेण ।
तत्र तल्पमधिशय्य स तस्थौ संवृतोपि विदितः सविवेन ॥ २२ ॥

देव किन्न विहिताद्य विभूषा पूर्ववत्प्रकृतयोपि न दृष्टाः ।
किं हृदि स्खलति सोपि रिपुस्ते मन्त्रिणेत्यभिहिते समवोचत् ॥ २३ ॥

तात नैव रिपुणां गणनास्ति किन्तु नः स्खलति चेतसि तन्वी ।
कामभल्लिरिव यत्र निशाता प्रेयसी नृपतिहेमरथस्य ॥ २४ ॥

तं जगाद सचिवो नहि युक्तं कर्म कर्तुमुभयत्र विरुद्धम् ।
कृत्यमेव यदि तत्प्रतिपाल्यः कश्चनापि समयो नृपचन्द्र ॥ २५ ॥

क्षोभमेति न यथा परिवारो रक्ष्यते च प्रविशन्नपवादः ।
त्वां तथा तव विधास्यति वश्यां बुद्धिकौशलवशेन जनोऽयम् २६

सोपरोधमिति तस्य वचांसि प्रत्यपद्यत नृपः सचिवस्य ।
सञ्चचाल च ततः स कथञ्चित्संस्मरन्प्रियतमामभिरामम् ॥२७॥

पातयन् गिरितटानि महान्ति प्रापयंश्च विपिनानि विकाशम् ।
शोषयंश्च सरितः सुगभीरा भूपतिः स रिपुदेशमवाप ॥ २८ ॥

वेष्टिते सति बलै रिपुदुर्गे भीष्मयोधसमधिष्ठितमध्ये ।
धीरयन्निजबलान्यथ भीमो निर्जगाम रभसा समरार्थम् ॥ २९ ॥

उल्लसच्चटुलवाजितरङ्गे प्रस्फुरद्विमलचामरफेने ।
शस्त्रदारितरिपुद्विपकुम्भप्रोल्लसन्मसृणमौक्तिकचित्रे ॥ ३० ॥

संप्रहारगलितास्त्रजलौघे तुङ्गकुञ्जरशिलोच्चयदुर्गे ।
योधघातपतितैर्गजपादैर्यत्र कच्छपसमैः समभावि ॥ ३१ ॥

शस्त्रलूनपतिता गजहस्तास्तुल्यतामुपययुर्मकराणाम् ।
तत्र सागरसमे समरे द्राग् तं कथंचन विजित्य बबंध ॥ ३२ ॥

नम्रराजकशिरोमणिरश्मिद्योतिताङ्घ्रिसरसीरुहयुग्मः ।
तत्र देशि सचिवान्विनिवेश्य स्वां पुरीं प्रतिजगाम कृतार्थः ॥३३॥

नीलनीरभरपूरितमध्या निम्नगा निजबलैर्घनपङ्काः ।
कुर्वता कृतसमुत्सवलोका कोशला नृपतिना समवापि ॥ ३४ ॥

तां प्रविश्य विहितापणशोभां नागरैः पुरमुदस्तपताकाम् ।
सोत्सवामिति निरुत्सुकचित्तो राजमन्दिरमवाप च शून्यः ॥३५॥

तत्र मङ्गलशतानि विचित्रं गीतमुन्नतकुचाः प्रमदाश्च ।
आसनानि शयनानि विभूषाः सर्वमस्य विपतामुपयातम् ॥३६॥

सर्वतो मुकुलयन् सहकारान् पुष्पयन्नु वनं वनराजीम् ।
अंतरेत्र समवाप वसंतः क्षारसेचनमिव क्षतमध्ये ॥ ३७ ॥

यामिनी प्रियतमाप कृशत्वं खण्डितेव शशिना दयितेन ।
वायवो मलयजा वबुरस्य तापशांतिकृतये कृपयेव ॥ ३८ ॥
पङ्कजानि सरसीषु विरेजुस्तत्क्षणे विकसितानि सितानि ।
मन्मथस्य शिविरे विजिगीषोरातपत्ररुचिभाञ्जि समन्तात् ॥३९॥
कुड्मलौ विचकिलस्य सुगंधौ षट्पदः कृतपदो विरराज ।
निश्चलो मधुरसासवलोभादिन्द्रनील इव मौक्तिकपृष्ठे ॥ ४० ॥
कोकिलाकलमृदङ्गरवेण चञ्चरीककृतझङ्कृतगीतैः ।
दक्षिणेन मरुता गुरुणेव नर्तिताः शुशुभिरे वनराज्यः ॥ ४१ ॥
तेन तत्र तरवोपि बभूवुर्यैः समं न निचिताः सुमनोभिः ।
तानि तत्र कुसुमान्यपि नासन् सेवितानि मधुपैर्न हि यानि ॥४२॥
तारहारघनसारसरोजैस्तालवृन्तकदलीदलवातैः ।
तद्वियोगजनितं परिवारो यत्नवानपि नुनोद न तापम् ॥ ४३ ॥
मालती मलयजं शरदिन्दुः पङ्कजानि घनसारमुशीरम् ।
विक्लवस्य विरहे दयितायाः किन्न किन्न विपतां प्रतिपेदे ॥ ४४ ॥
शोकविक्लवमितौ परिवारे भूपतौ च विरहानलतप्ते ।
आजगाम सचिवः समयज्ञः शङ्कितश्च समचिन्तयदेवम् ॥ ४५ ॥
आनयामि यदि हेमरथस्य प्रेयसीं नरपतेरयशः स्यात् ।
तां विना च न च कञ्चिदुपायं जीवितेस्य विमृशामि कथंचित् ॥४६॥
यद्यपीदमुभयत्र विरुद्धं राजकार्यमतिकार्यमवश्यम् ।
तद्वसन्तमहमङ्गलहेतोराह्वयामि नृपतीन् सकलत्रान् ॥ ४७ ॥
कार्यमित्थमवधार्य स राज्ञः सन्निवेद्य च यथाविधिपूर्वम् ।
शासनं च विससर्ज समंताद्राजकार्यनिपुणो हि सुमन्त्री ॥ ४८ ॥
शासनं शिरसि तस्य विधाय सावरोधवनितं नृपचक्रम् ।
आजगाम सहसैव सतोषमध्युवास च यथास्वनिवासम् ॥ ४९ ॥
सावरोधनजनो दृढभक्तिः प्राप काञ्चनरथोपि नरेन्द्रः ।
सोधिकं नृपतिनापि नृपेभ्यो गौरवेण ददृशे परमेण ॥ ५० ॥

अन्तरेत्र कलकोकिलनादं झङ्कृतैर्मधुहृतं कृतशोभम् ।
पुण्यपुञ्जरजसाभिसमन्ताद्वासितं कृतकभूधररम्यम् ॥ ५१ ॥
भूषितं वनमुदारतरेण तद्वसंतविभवेन निशम्य ।
भूपतिः सह नृपैः सकलत्रैः क्रीडितुं वनमगात्कृतकेन ॥ ५२ ॥
बद्धकुड्मलतया सहकारैर्ज्ञातपल्लवतया च लताभिः ।
श्रस्तबन्धनतया सुमनोभिः कल्पितार्घमिव तद्वनमासीत् ॥ ५३ ॥
स्वेच्छया कतिचिदेव दिनानि क्रीडितं नृपतिभिः सकलत्रैः ।
तत्र वारवनिताजनमध्ये ताम्यतिस्म परमेष नृपेन्द्रः ॥ ५४ ॥
उत्सवं समनुभूय नरेन्द्रो राजकं च परितोष्य यथेष्टम् ।
वस्त्रवाहनविभूषणदानैः सत्वरं सदयितं विससर्ज ॥ ५५ ॥
विद्यते न युवयोरनुरूपं वत्स साम्प्रतमलंकृतिजातम् ।
पृष्ठतोऽरिबहुलो विषयस्ते तद्व्रज त्वमिति शाधि सपत्नान् ॥५६॥
वासराणि कतिचित्सह वृद्धैस्तिष्ठतु प्रियतमा तव तावत् ।
प्रेषयाम्यनुपदेपि विभूष्य भूषणैर्विरचितामरचापैः ॥ ५७ ॥
तत्तथेति वचनं प्रतिपद्य भूपतेः सपदि हेमरथोपि ।
सौविदल्लसहितां निजपत्नीं तां विमुच्य स जगाम विशङ्कः ॥५८॥
अन्तरेत्र विरहानलतप्तं भूपतिं समवलोक्य दिनेशः ।
तप्ततप्त इव तद्व्यथयासौ पश्चिमं जलनिधिं प्रतिपेदे ॥ ५९ ॥
लोललोचनजलाकुलितानि क्रन्दितध्वनिविभिन्नमनांसि ।
चक्रवाकमिथुनानि वियोगं जीवितं विधृतवंति कथञ्चित् ॥ ६० ॥
चक्रहूतिमिथुनानि वियोगं लम्भयन्मुकलयत्कमलानि ।
कामिनां च जनयन्परितोषं भानुमान् जलनिधौ निममज्ज ॥ ६१ ॥
पश्चिमार्णवतरङ्गसहस्रैरूर्ध्वपातिभिरतीव विलोलैः ।
तत्क्षणान्नभसि पाटलरागात्क्षालितेव गलिता ननु सन्ध्या ॥ ६२ ॥
सप्तसप्तिकरपातभियेव यत्तमो गिरिगुहासु निलीनम् ।
तद्व्यजृम्भत गते दिननाथे को न कालबलमाप्य बलीयान् ॥ ६३ ॥

निम्नमुन्नतचलाचलचक्रं प्राञ्जलञ्च विषमञ्च समञ्च ।
दुर्जनस्य सदृशेन समस्तं नीतमन्धतमसेन समत्वम् ॥ ६४ ॥
सन्निशातकरवालसवर्णे व्योम्नि तारकगणो विरराज ।
इन्द्रनीलमयभूतलकीर्णो मालतीसुमनसां प्रकरो वा ॥ ६५ ॥
सान्द्रमन्धतमसं विनिहन्तुं वाध्यमानमिव लोकमशेषम् ।
मार्गणानिव विशुद्धिसमेतश्चन्द्रमा निजकरान् विससर्ज ॥ ६६ ॥
केतकीकुसुमकेसरपाण्डुज्योत्स्नया धवलयन् सकलाशाः ।
मन्दमन्दमुदितस्तुहिनांशुर्दर्पणश्रियमुवाह निशायाः ॥ ६७ ॥
ज्योत्स्नयेति धवले भुवनान्ते प्राहिणोन्नरपतिर्निजदूतीम् ।
सा विभूषणमिषेण मृगाक्षीं तां निनाय नरनाथनिकेतम् ॥ ६८ ॥
चाटुभिः सपरिहासवचोभिस्तां तथा समनुनीय स रेमे ।
जातमस्य च यथा चरितार्थं यौवनं च मदनो विभवश्च ॥ ६९ ॥
लोचनान्तकनिरीक्षणमन्तः कूजितं च हसितं च तदस्याः ।
चुम्बितञ्च वितुतञ्च रतञ्च व्याजहार सुरतोत्सवरागम् ॥ ७० ॥
गीतनृत्यपरिहास्यकथाभिर्दीर्घिकाजलवनान्तविहारैः ।
तत्र तौ रतिसुखार्णवमग्नौ जज्ञतुर्न समयं समतीतम् ॥ ७१ ॥
सौविदल्लवचनादथ वार्तां तां निशम्य नृपहेमरथोपि ।
वल्लभास्मरणजादतिदुःखादमन्मथग्रहवशाद्विवशोऽभूत् ॥ ७२ ॥
शून्यमेव हसतिस्म स मोहं यात्यकारणमुपैति च गेहात् ।
कण्ठपीठविलुठद्धनवाष्पं हा प्रियेति दयिते च रुरोद ॥ ७३ ॥
कामदुर्द्दमपिशाचवशेन भ्रष्टराज्यविभवः स धरित्र्याम् ।
हा प्रियेति कृततारविरावं भ्राम्यतिस्म शिशुभिः परिवीतः॥ ७४ ॥
धूलिधूसरशिरोरुहगात्रः स्कंधलम्बितपटच्चरकन्थः ।
बम्भ्रमन्प्रतिपुरं प्रतिरथ्यं कोशलं प्रति जगाम स दैवात् ॥ ७५ ॥
तत्र वल्लभतमाह्वयमुच्चैरुच्चरन्ननु जनं समधावत् ।
धावमानमवलोक्य तथा तं धात्रिका सुबहुदुःखमरोदीत् ॥ ७६ ॥

बाष्पपूर्णनयनान्तमकाण्डे तां विलोक्य रुदतीं समपृच्छत् ।
वल्लभा नृपतिहेमरथस्य रुद्यतेऽम्ब किमकारणमेव ॥ ७७ ॥
सा तदाग्रहवशाच्च कथञ्चिद्गद्गदस्वरमचीकथदेवम् ।
त्वद्वियोगजनितं दुरवस्थं वीक्ष्य पुत्रि रुदितं तव भर्तुः ॥ ७८ ॥
धातृकावचनमश्रुतपूर्वं सा निशम्य सहसैव चुकोप ।
युज्यतेम्ब कटुकं तव वक्तुमीदृशं मम सुदुःखविधायि ॥ ७९ ॥
पार्वणेन्दुवदनस्तरलाक्षो दीर्घपीवरभुजो मम भर्त्ता ।
यत्पदाम्बुजरजोऽपि नरेन्द्रैरुह्यते स्रगिव मूर्द्धभिरुच्चैः ॥ ८० ॥
रूपनिर्जितमनोभवकीर्तिस्तस्य किं वद नृपस्य दशेयम् ।
इत्युदीरितवतीं निजपुत्रीं प्रत्यवोचत तदा किल धात्री ॥ ८१ ॥
लक्षणानि च गतिं च वचांसि पुत्रि सम्यङ्निरूपय तावत् ।
तन्निरूप्य च तथेति विदित्वा सा निजं प्रियतमं विषसाद ॥ ८२ ॥
यावदास्त विनिगूढविषादं सात्मसौधशिखिरे सह धात्र्या ।
तावदाप शरदाहितशोभं वीक्षितुं क्षितितलं क्षितिपोपि ॥ ८३ ॥
पूर्ववत्क्षितिपतौ कृतकेन गौरवं प्रकुपिताप्यकृतासौ ।
वीक्षितुं च शरदं सह देव्या सौधसप्तमतलं प्रतिपेदे ॥ ८४ ॥
शारदीं सुखमवैक्षत लक्ष्मीं यावदत्र नृपतिः सह देव्या ।
तावदेत्य विदितो नतिपूर्वं चण्डकर्मपुरुषः समवोचत् ॥ ८५ ॥
द्वारि देव परदारनिषेवी कोपि तिष्ठति पुमान् दृढबद्धः ।
तस्य दोषसदृशं वद दण्डमुत्युदीर्य विरराम तलारः ॥ ८६ ॥
तन्निशम्य कुपितो नरनाथश्चण्डकर्मपुरुषं समवोचत् ।
क्षिप्रमेनमधिरोहय शूलं वार्तया किमिह दोषवतां नः ॥ ८७ ॥
देव किंकृतमनेन यतोऽयं वध्यतेति तरुणोपि वराकः ।
तन्निशम्य वचनं निजपत्न्या नीतिवानिति जगाद नरेन्द्रः ॥ ८८ ॥
एष देवि परदारनिषेवी वध्य एव हि विचित्रवधेन ।
सा नरेश्वरमवोचत दोषः कोऽपि किं परवधूहरणेऽस्ति ॥ ८९ ॥

वाढमस्ति यदि तत्किमिवाहं न्यायमार्गविदुषापि हृतास्मि ।
मर्मवेधिवचनं दयितायास्तन्निशम्य स जगाद विरागात् ॥ ९० ॥

तुङ्गपीवरघनस्तननम्राःसन्ति किं युवतयो न मनोज्ञाः ।
येन मोहवशगेन दुरन्तं कर्म कुत्सितमकारि मयैतत् ॥ ९१ ॥

प्रेयसी परिजनं च सुताश्च यौवनं च विषयाश्च धनं च ।
बान्धवाश्च सुहृदश्च सुखं च जीवितं च न नृणां स्थिरमेतत् ॥९२ ॥

भावयन्निति भवाब्धिमसारं भङ्गुरेषु विषयेषु विरक्तः ।
वासरान् कतिपयान् गृहवासे तस्थिवान्नरपतिः स मुमुक्षुः ॥९३॥

अन्यदाथ वरपिण्डनिमित्तं चर्यया विमलवाहननामा ।
राजमन्दिरमवाप यतीन्द्रस्तं मुदा परमयाधृत भूपः ॥ ९४ ॥

प्रासुकं नृपतिना विधिपूर्वं संयताय वरदानमदायि ।
तेन चान्नफलतः सहसैव चित्रपञ्चकमवापि दुरापम् ॥ ९५ ॥

ध्यानधारणकृतप्रतियत्नो निर्ममः सकलवस्तुषु साधुः ।
तत्पुरोपवनमागमचक्षुः प्राप्तवान्स्वपरभागविमुक्तः ॥ ९६ ॥

घातिदावमदहन्मुनिनाथो ध्यानपावकशिखाभिरशेषम् ।
तत्र केवलमतीन्द्रियमस्य देवदानवनुतं समभावि ॥ ९७ ॥

तं निशम्य सहसा वनपालाल्लब्धकेवलमलं परितुष्टः ।
सावरोधनजनः सह भूपैर्वन्दितुं तमगमन्नरनाथः ॥ ९८ ॥

तत्र भक्तिभरनिर्भरभूपो भव्यकैरवशशाङ्कमवेक्ष्य ।
मेदिनीलुलितकुन्तलभारस्त्रिः परीत्य मुनिनाथमनंसीत् ॥ ९९ ॥

आशिषा भगवतानुगृहीतो भूतलेऽतिविनयादुपविश्य ।
मौलिचुम्बिकरपङ्कजकोशः पृच्छतिस्म दशधा जिनधर्मम् ॥ १००॥

यं निषेव्य भविनां न हि दूरे
देवदानवनरेन्द्रसुभोगाः ।
दुर्लभं भवशतेष्वपि धर्मं
भूपतिं तमशिषन्मुनिनाथः ॥ १०१ ॥

तं निशम्य दुरवापमपुण्यै—
राजवंजवमसारमवेत्य ।
सन्निवेश्य च सुतं निजराज्ये
शिश्रिये स पदवीं श्रमणानाम् ॥ १०२ ॥

कैटभस्तदनुजः प्रियधर्मः
प्रेयसी मधुनृपस्य च पत्नी ।
इन्दुदीप्तिसहिता वरपद्मा
शिश्रियुः श्रवणतामथ सर्वे ॥ १०३ ॥

उग्रतप्ततपसश्चिरकालं
शास्त्रसागरतटं परमाप्ताः ।
ते समाधिमृतयः समभूव--
न्नच्युते दिवि सुराः सममेव ॥ १०४ ॥

इन्दुदीप्तिरुदयान्मलिनस्य
कर्मणस्त्रिदशतामपहाय ।
राजताद्रिगिरिपत्तनराज्ञः
सम्बभूव तनया हरिनाम्नः ॥ १०५ ॥

अच्युते त्रिदशतां दिवि लब्ध्वा
पूर्वजन्ममधुभूपकलत्रम् ।
उत्तरेत्र रजताचलभागे
तत्खगेश्वरसुताजनि साध्वी ॥ १०६ ॥

अच्युते दिवि सुखान्यनुभूय
पूर्वजन्ममधुभूपचरो यः ।
रुक्मिणीतनुभुवो मदनोऽसौ
द्वारिकापुरि हरेस्तनयोऽभूत् ॥ १०७ ॥

यस्तु कैटभचरस्त्रिदशोभू-
दच्युते तदनुजः पुरुपुण्यात् ।

श्रीपतेः प्रियसुतो गुणपात्रं
जम्ववत्युदरजो भविता सः ॥ १०८ ॥

जन्ममृत्युवहुदुःखविचित्रां
संसृतिं समनुभूय चिरेण ।
धूमकेतुरसुरस्तपसाभूत्
कुत्सितेन नृपहेमरथोपि ॥ १०९ ॥

अन्यजन्मनि हृतेति मत्प्रिया
तं जहार पृथुकं जिघांसया ।
धूमकेतुरसुरः परं रुषा
भूप वैरमिति हेयमङ्गिभिः ॥ ११० ॥

इति नृपतिकरस्थो नारदस्तद्यथाव-
न्मदनसहजवृत्तं सर्वमेवं निशम्य ।
त्रिभुवनगुरुपादौ पूजयित्वातिभक्त्या
खचरनिलयमागाद्बालकालोकनाय ॥ १११ ॥

गत्वा तत्र खगेन्द्रवेश्मनि चिरं दृष्ट्वा च तं वालकं
दत्ताशीर्वचनस्ततः प्रमुदितो द्वारावतीमाययौ ।
तस्यामङ्गजवार्तया प्रमुदितं कृत्वा मुनिः श्रीपतिं
शुद्धान्तं स विवेश तस्य जननीमाश्वासितुं रुक्मिणीम् ॥ ११२ ॥

स्थानं तस्य भवान्तराणि च वयो रूपं च लाभैः समं
श्रीसीमंधरतः सदस्यधिगतं चिन्हं च तत्सङ्गमे ।
रुक्मिण्या विनिवेद्य नारदमुनिः सर्वं यथावन्मुदा
कृत्वा तां सुतवार्तया प्रमुदितां दृष्ट्वा यथेष्टं ययौ ॥ ११३ ॥

इति श्रीसिन्धुराजसत्कमहामहत्तमश्रीपप्पटगुरोः पंडितश्रीमहासेनाचार्यस्य
कृते प्रद्युम्नचरिते सप्तमः सर्गः ॥ ७ ॥

---

# अष्टमः सर्गः ।

अथ कालसम्वरखगेन्द्रगृहे
जननेत्रकैरवविकाशयिता ।
जनयन्प्रमोदमधिकं जगतो
ववृद्धे स बालकविधुः शनकैः ॥ १ ॥

परिरक्षया खगपतेः सुकृती
मदनोभिवृद्धिमुपयाति यथा ।
समुपागमन्नमितशत्रुगणः
सममेव सम्पदखिलापि तथा ॥ २ ॥

समवाप्य जन्मकुलरत्ननिधौ
ललितं च शैशवमतीत्य शनैः ।
सकलाः क्रमात्समधिगम्य कलाः
समवाप यौवनमनङ्गशशी ॥ ३ ॥

सहसास्य सारमसमीक्ष्य तदा
जनकं प्रतीयुरथ ये कुपिताः ।
बलगर्विताः समरलब्धजयाः
स जिगाय खेचरपतीन्युधितान् ॥ ४ ॥

विविधोच्छ्रितध्वजवितानगणैः
पिहिताहिमद्युतिकरं नगरम् ।
समुपेयिवान्मनसिजो विजयी
त्रिदशाधिनाथ इव देवपुरम् ॥ ५ ॥

जयभूषितं समलोक्य नतं
तनयं परं स परिहृष्टमनाः ।

वितरीतुमस्य युवराजपदं
नृपतिर्ववंछ सचिवानुमतः ॥ ६ ॥

प्रथमं वनेप्यवगणेन मया
समदायि पुत्रसदृशः पुरतः ।
तव यौवराज्यमधुना तु पुनः
स्वकुलाग्रतः स्वयमपीह दिशे ॥ ७ ॥

मनसाभिवांञ्छितमुदारमनाः
सकलार्थिनामुरु वितीर्य धनम् ।
उपराजभृद्युवराजपदं
मदनाय सोत्सवमदान्नृपतिः ॥ ८ ॥

इति यावदास्त मदनः सुखितो
नृपतेरवाप्तयुवराजपदः ।
कुपितः स्वमातृवचनादहितं
खचराधिपेश्वरतनूजगणः ॥ ९ ॥

शयनासने सिचयपानविधा-
वपकारमीषुरतिदुष्टतमः ।
मकरध्वजस्य पुरुपुण्यवशा-
दरिभिः कृतापि विफलापकृतिः ॥ १० ॥

तमथान्यदा कुलिशदंष्ट्रमुखाः
खचराधिराजतनयाः सरुषाः ।
बहुधाभिमंत्र्य विजयार्द्धगिरेः
शिखरं विनिन्युरसमं कुटिलाः ॥ ११ ॥

शिखरे च तस्य शरदभ्रनिभं
जिननाथसद्मदद्दशुस्त्रिमुखम् ।
त्रिदशेन्द्रवन्दितमणिप्रतिमं
प्रणिपत्य तस्थुरखिलाश्च पुरः ॥ १२ ॥

प्रविलोक्य गोपुरमथास्य तदा
वदतिस्म तान्कुलिशदंष्ट्रखगः ।
अनुजाः सदा वदति खेटजनो
विशतीह यः स बलवान्पुरुषः ॥ १३ ॥

तदहं विशामि भवतां पुरतो
गुरुगोपुरं खचरराजकृते ।
इति वाचमस्य विनिशम्य तदा
द्रुतमारुरोह मदनो कुटिलः ॥ १४ ॥

अधिरुह्य तत्र च स धैर्यनिधिः
क्षणमास्त यावदतिरम्यतमे ।
श्वपदोपमर्दभवकोपभरा—
त्सहसाविरास भयकृद्भुजगः ॥ १५ ॥

स जगौ च तं किमु मदीयपदे
कृतवान्पदं खल नराधम रे ।
इति तर्जयन्परुषवाग्भिरसौ
ववले युयुत्सुरभिकाममहिः ॥ १६ ॥

भृकुटीकरालितललाटतटं
रभसा विजित्य युधि तं मदनः ।
नतमौलिकुड्मलितहस्तयुगं
समपृच्छदेवमिह कस्त्वमहे ॥ १७ ॥

भुजगो जगाद मुदितो मदनं
पृथुगोपुरे सुचिरकालमहम् ।
स्थितिमाप्तवानिह हि नाथ यथा
कथयामि ते सकलमेव तथा ॥ १८ ॥

अलकाभिधं पुरमिहास्ति गिरौ
विजयार्द्धनामनि जगत्प्रथितम् ।

समभूत्पतिः कनकनाभनृपो
दयितानिलास्य च बभूव सती ॥ १९ ॥

सुरतोत्सवामृतरसानुभव—
प्रतिसक्तयोः समभवत्तनयः ।
त्रिदिवाच्च्युतस्त्रिदिवनाथसमो
गुणवान् हिरण्य इति नाम तयोः ॥ २० ॥

खचराधिपत्यमनुभूय चिरं
क्षणभंगुरं जगदवेत्य तथा ।
विषयेष्वसक्तहृदयः सहसा
तनयं नियुज्य निजराजभरे ॥ २१ ॥

पिहिताश्रवं मुनिपतिं विधिना
प्रणिपत्य सादरमवाप्य तपः ।
सुसमाधिपावकशिखाभिरसौ
परिदह्य कर्मवनमाप शिवम् ॥ २२ ॥

तनयः स्थितोऽस्य गुरुसौधतले
परिवारितो निजपुरन्ध्रिजनैः ।
गुरुसम्पदा वियति दैत्यपतिं
स ददर्श यान्तमुरुसैन्ययुतम् ॥ २३ ॥

विभवं विलोक्य खचराधिपते—
रुपमामतीतमथ मानधनः ।
अनुजं नियोज्य निजराज्यपदे
स विवेश सिद्धसदनं परमम् ॥ २४ ॥

ऋतुभिर्युताः स दशकत्रितय—
प्रमिताः समाः समधिसह्य तपः ।
पुरुरोहिणीप्रभृतिमंत्रगणं
विधिवत्प्रसाध्य समभून्मदनः ॥ २५ ॥

स चकार राज्यमनुजानुमतः
समये नमेः पुनरपीह नृपः ।
मुनितां यियासुमथ मन्त्रगण—
स्तमुवाच नः कथय नाथ विभुम् ॥ २६ ॥

इति मन्त्रसार्थवचनान्मुदितः
प्रणिपत्य तीर्थकृतमाह नमिम् ।
विमलावबोध जगदेकपते
भवितास्य कः पतिरमेयगुणः ॥ २७ ॥

हरिवंशनेमिजिनतीर्थभव—
स्तनयो हरेर्मनसिजोस्य पतिः ।
भवतेति जैनमवधार्य वचः
खचराधिपश्च तमवोचदिदम् ॥ २८ ॥

मणिगोपुराक्रमणगर्वभृतो
भव तस्य मन्त्रगण सेवयिता ।
इह रक्षणेऽस्य च नियोज्य स मां
मुनितामवाप्य च जगाम शिवम् ॥ २९ ॥

परिपाल्य मंत्रगणकोशमिमं
स्थितवाननेहसमियन्तमहम् ।
अधुना समर्प्य तव तं विधिना
समभूदयं जन इहातिकृती ॥ ३० ॥

मुकुटं वितीर्य मणिरत्नचितं
समुवाच गोपुरपतिर्मदनम् ।
कथितस्तदेव नमितीर्थकृता
तव किङ्करोस्मि वद किं करवै ॥ ३१ ॥

इति तं विलोक्य खचरेन्द्रसुताः
फणिना वितीर्य मुकुटं चकिताः ।

रिपवो मिथः समवलोक्य मुखं
तमृजुं विनिन्युरभि कालगुहम् ॥ ३२ ॥

अतिविप्रकृष्टमुपविश्य ततो
मदनं समूचुरिति भूपसुताः ।
अविचारमत्र लघु यः कुरुते
स्वरमिष्टवस्तु लभते स पुमान् ॥ ३३ ॥

अविशत्तदीयमवधार्य वचो
मदनो गुहां गृहमिवातिमुदा ।
अथ वज्रपातमिव भीमतमं
वितताम तत्र किल ताररवम् ॥ ३४ ॥

विनिशम्य कर्णकटुमस्य रवं
रुधिरारुणाक्षियुगलोऽतिरुषा ।
दलितांजनच्छविरतीव महा-
नथ राक्षसाधिपतिराविरभूत् ॥ ३५ ॥

परिपालिता मम भुजेन गुहा
किमु कर्णजाहमपि ते न गता ।
अपवित्रपादरजसा यदिमा-
मपवित्रयस्यतिपवित्रतमाम् ॥ ३६ ॥

परुषेण तस्य वचसेति भृशं
कुपितस्तमाह शितपञ्चशरः ।
खल राक्षसाधम ददासि वृथा
कुजनाधिकाः कुवचनं किमु रे ॥ ३७ ॥

रणलम्पटस्त्वमसि चेत्कुरुषे
किमु नास्त्रपातमविलम्बयिता ।
वचसा न पौरुषमिह क्रियया
क्रियते भटैर्ननु कुलप्रभवैः ॥ ३८ ॥

यमवेश्म बाल समुपैतुमना
किमु रे यदित्थमभिभाषयसे ।
इति कालराक्षसपतिर्वचनैः
परितर्जयन्नभि मनोजमगात् ॥ ३९ ॥

स तथा पतन्नतिरुषा प्रसभं
विषमेषुणापि रुरुधे नितराम् ।
घनमुष्टिभिः कुलिशपातसमैः
करणैश्च युद्धमभवच्च तयोः ॥ ४० ॥

युधि कालराक्षसपतिं स बली
परिघातबन्धननिपातकरैः ।
स्वकरैर्विधाय विमदं सरुषं
स्ववशं निनाय नतमौलिकरम् ॥ ४१ ॥

बिसतन्तुचारुचमरद्वितयं
विशदातपत्रमसमं स तथा ।
वसुनन्दकं स तरवारि ददौ
मकरध्वजाय परितुष्टमनाः ॥ ४२ ॥

इति पूजितं समवलोक्य तथा
कुसुमध्वजं नरपतेस्तनयाः ।
छलतोपकर्तुमतिभीमतमा-
मपरामनैषुरभिनागगुहाम् ॥ ४३ ॥

अतिदूरतः समुपविश्य ततो
वदतिस्म खेचरतनूजगणः ।
भयदामिमां विशति यो मनुजो
लभते स शर्म यशसानुगतः ॥ ४४ ॥

वचनं निशम्य तदभीः सहसा
प्रविवेश तामहिपतेः स गुहाम् ।

रणकेलिना तमवजित्य हठात्
स्ववशं चकार भुजगं मदनः ॥ ४५ ॥

मृदुविष्टरं भुजगतल्पयुतं
कलवल्लकीं[1] चरणपीठमथो ।
गृहकारिसैन्यपरिरक्षकया
सह विद्यया सममवाप ततः ॥ ४६ ॥

इति लब्धलाभमवलोक्य तदा
समुपागतं मकरकेतुममी ।
अनु वापिकामथ विनन्युरमुं
भयदां तदीशसुररक्षणया ॥ ४७ ॥

जगदुश्च दूरमुपविश्य ततो
विदधाति योऽभिपवमत्र पुमान् ।
जगतां पतिर्ध्रुवमसौ सुभगो
भवितेति खेचरजनोक्तिरियम् ॥ ४८ ॥

वचनं तदीयमवधार्य तदा
जयवान्विशङ्कहृदयः सरलः ।
सरसीं गजेन्द्र इव यावदिमा--
मवगाहते किल स पुष्पधनुः ॥ ४९ ॥

सितपुण्डरीकरजसारुणिता
त्रिदशापगेव शुचिनीरभृता ।
शठ नीचवंश कथमाः स्पृशता
मलिनीकृतेयमधुना भवता ॥ ५० ॥

त्वमशान दुर्नयविपाकतरोः
फलमस्य मर्मभिदुरैर्वचनैः ।

---

१ मनोज्ञवीणां ।

इति तर्जितस्तदधिपेन तदा
वलेथ पञ्चविशिखोपि युधि ॥ ५१ ॥

क्रमजातसन्ततजयापजयं
खचराधिपस्य तनयः सहसा।
युधि तं विजित्य समवाप्य ततो
मकरध्वजं मकरकेतुरभूत् ॥ ५२ ॥

हुतभुग्निवासमथ कुण्डममुं
सरलाङ्गजं समुपनीय जगुः।
विशतीह यः स खलु वीरपति-
र्लभते यथाभिलषितं च नरः ॥ ५३ ॥

वचनं प्रपद्य स तथेत्यविश-
त्रिदशाशुशुक्षणिमपास्तभयः।
अतितीव्रहेतिनिवहेन जग-
त्परिदग्धुमुद्यतमिव ज्वलितम् ॥ ५४ ॥

हुतभुक्शिखासमभिलीढवपुः
स रुषापविध्य दहनं क्षणतः।
प्रकृतिस्थितादसुरतः प्रणता-
च्छिखिधौतवस्त्रयुगमाप परम् ॥ ५५ ॥

अथ मेषसन्निभगिरिद्वितयं
समयोपनीय जगदुः कुटिलाः।
अनयोर्य एति विवरं स जयी
लभते च लाभमिति वृद्धवचः ॥ ५६ ॥

स विताड्य कूर्परयुगेन गिरी
प्रविवेश तत्र खचरानुमतः।
विजितेन मेषविबुधेन तदा
समदायि कुण्डलयुगं रुचिरम् ॥ ५७ ॥

विजयार्द्धकौतुकदिदृक्षिपया
निजलीलया कृतपरिक्रमणः ।
परिवारितः खचरराजसुतैः
स कदाचिदाप सहकारतरुम् ॥ ५८ ॥

उदितं च तैरमृतचूततरोः
परिपक्वमेकमपि यः स्वदते ।
फलमस्य यौवनमहार्यमसौ
तरसा समेत्य सुभगश्च भवेत् ॥ ५९ ॥

परिपाकरम्यफलनम्रशिखं
तमथारुरोह नृपतेस्तनयः ।
कपिरूपधारिधनदेन भृशं
परितर्जितश्च स विलोक्य रुषा ॥ ६० ॥

चपले दृशौ श्रवणयोर्युगलं
विषमं विधाय कपिरुग्रमुखः ।
शिरसीद्धवालधिमुदंशुरदो
मदनेन सार्द्धमकरोत्समरम् ॥ ६१ ॥

कपिमुद्धतं युधि नियम्य चिरा-
त्परिगृह्य पुच्छमदयं भ्रमयन् ।
वसुधातले किल निहन्ति यदा
प्रकटस्तदा समभवत्रिदशः ॥ ६२ ॥

अमृतस्रजं वरकिरीटयुतां
नवपादुके गगनगे च तदा ।
अवदानतोषितमतिर्दनुजो
विषमेषवे कृतनुतिः समदात् ॥ ६३ ॥

करिरूपधारिसुरभीमतमं
स कपित्थकाननमनीयत तैः ।

गदितं च नूनमिह संविशतां
जगदाधिपत्यमपि हस्तगतम् ॥ ६४ ॥

विषमेषुरत्र किल तद्वचना—
द्विशतिस्म यावदुरुधैर्यनिधिः ।
चलदञ्जनाचलनिभो रुषितः
सहसा दधाव तमभि द्विरदः ॥ ६५ ॥

चरणान्तरे करपुरो रदयो—
र्विचरंश्चकार विमर्दं स गजम् ।
स च तं जगाद नतिपूर्वमिदं
तव काम कामदगजोस्मि सदा ॥ ६६ ॥

अथ साहसैकरसिकः सह तै—
रनु वामलूरमगमत्स युवा ।
उप तत्प्रगम्य जगदुः खचराः
स नृपोध्यदः समधिरोहति यः ॥ ६७ ॥

स तदा प्रधाव्य च तमाक्रमते
निजवामपादहतिकोपवशात् ।
भुजगाकृतिस्तमसुरोभ्यगम—
द्विजितः स पुष्पधनुपापि रणे ॥ ६८ ॥

छुरिकाश्वरत्नकवचानि तदा
वरमुद्रिकामपि नतः स ददौ ।
विलसन्समुग्धवदनः सह तैः
स ततः सरावनिभमद्रिमगात् ॥ ६९ ॥

समुपैति योस्य शिखरं स पति—
र्भविता श्रियः खचरवाक्यमदः ।
समरोहदेनमथ सोपि तदा
विजितश्च बाहुयुधि तेन सुरः ॥ ७० ॥

वरकण्ठिकाङ्गदयुगं परमं
कटकद्वयं स कटिसूत्रमतः ।
समवाप्य पञ्चविशिखोपि ततः
समगाद्गुहामनु वराहगिरेः ॥ ७१ ॥

स विवेश तां कृतरवस्तरसा
दनुजस्तमैक्षत वराहमुखः ।
समरे स तेन विजितश्च ददौ
जयघोषशंखसुमनोधनुषी ॥ ७२ ॥

क्षणतः पयोवनमवाप्य कृती
खचरं मनोजवमितिप्रथितम् ।
छलतो वसंतकखगेन दृढं
स ददर्श तत्र सितमेकतरौ ॥ ७३ ॥

महतां विपत्सु विहितोपकृति-
र्यशसे भवेदिति नृपाङ्गभुवा ।
स विपाशितश्च तरसैव यया—
वपकारिणं च विनियम्य ततः ॥ ७४ ॥

रिपुरेष देव मम दुष्टमनाः
परिभूय मामिति गतस्तरसा ।
तदहं भवन्तमुपकारपरं
गतवांक्षणादपरिभाष्य विभोः ॥ ७५ ॥

तव किङ्करोस्मि वद किंकरवा—
यिति सन्निगद्य मदनाय ददौ ।
शुभविद्ययोर्द्वितयमिद्धरुचिं
बहुमूल्यहारमपि खेटपतिः ॥ ७६ ॥

सुरजालमप्युदितचित्रतरं
सखितां तयोरपि विधाय परम् ।

नवयौवनां खगवसंतसुतां
　　समवाप पञ्चविशिखोपि तदा ॥ ७७ ॥
जननान्तरोपचितपुण्यवशा—
　　दुपलब्धलाभमवगम्य खलाः ।
तमतस्तथापि शठभावरताः
　　समनैषुरर्जुनवनं भयदम् ॥ ७८ ॥
समुपैति यो वनमिदं विभयो
　　लभते स लाभमिति ते न्यगदन् ।
विजितश्च तत्र दनुजः[1] समदात्
　　सुमनोधनुः सह शरैरतनोः ॥ ७९ ॥
मदतापशोषणविमोहकरान्
　　समवाप्य पुष्पविशिखान्विषमान् ।
जनताविलोचनमनोमदना—
　　न्नितरां तदादि समभून्मदनः ॥ ८० ॥
गुरुभोगिरूपसुरभीमगुहां
　　विषमेषुणा सममयुः खचराः ।
समितौ विजित्य जयमाप ततः
　　कुसुमातपत्रशयने स जयी ॥ ८१ ॥
स ततो व्रजन्विपुलनागवने
　　निकषा समुन्नतजयंतगिरिम् ।
नवपल्लवाञ्चिततमालतले
　　गिरिवाहिनीमनु शिलाफलके ॥ ८२ ॥
विहितासनां स्थिरसमाधिकृते
　　निजनासिकाहितविलोलदृशम् ।
नखताम्ररश्मिपरिपाटलित—
　　स्फटिकाक्षसूत्रवलयं दधतीम् ॥ ८३ ॥

---

१ असुरः ।

सितधौतचीनपरिधानवर्ती
श्लथकेशपाशपिहितांसयुगाम् ।
सुखसौरभाहृतपडङ्घ्रिकुलै—
रुपसेव्यमानवदनाम्बुरुहम् ॥ ८४ ॥

परिणाहिपीनकुचभारनतां
जघनालसां जितमरालगतिम् ।
कलवल्लकीमधुरनादरवां
चलनीलवारिजविलोलदृशम् ॥ ८५ ॥

निजरूपयौवनकलाविभवै—
स्तरुणीं तृणीकृतजगत्रितयाम् ।
स विलोक्य विस्मयमवाप्य पुनः
परिचिन्तयामिति बभूव युवा ॥८६॥ कुलकम्

सवितुः प्रभा किमुत शक्रवधू
रजनीकरस्य किमु कान्तिरसौ ।
मकरध्वजस्य रमणी किमियं
भुवमागता ननु कुतोपि भवेत् ॥ ८७ ॥

सकलाकलादरविधौ क विधे—
र्जडता क सर्वसुभगा तरुणी ।
मदनो ध्रुवं त्रिनयनाग्निभया—
दसुरक्षणाय रमणीत्वमगात् ॥ ८८ ॥

उदवासतश्चिरमुपार्य तपो
नलिनं सुदुश्चरतरं सुदृशः ।
कथमप्यगाच्चरणयोरुपमां
परितर्कये नियतमेवमहम् ॥ ८९ ॥

इह कान्तिभाजिकथयोपरता—
मिह भव्यतापि जगतां विरता ।

इह सुन्दरीलवणिमा वसित
इह मुद्रितश्च महिलामहिमा ॥ ९० ॥

भुवनत्रयप्रथितरूपगुणां
युवतीं स्थितां समभिभूय तराम् ।
स विलोक्य तां मदयिता जगतां
परमुन्मनाः समभवन्मदनः ॥ ९१ ॥

अथ तत्क्षणादुपनतं त्रिदशं
विदितं वसंतकमपृच्छदसौ ।
किमु भीषणे स्थिरसमाधिरता
तरुणी वने वसति कस्य सुता ॥ ९२ ॥

स जगौ प्रभञ्जनजवोस्ति नृपो
दयितास्य वागिति तयोस्तनया ।
रतिनायिका कुसुमकेतुकृते
वनमाश्रिता तपति तीव्रतपः ॥ ९३ ॥

अवदानकर्मभिरतिप्रथितैः
स च देव सर्वविदितस्त्वमसौ ।
अनुरूपसंगमविधानतया
सफलश्रमो भवतु विश्वसृजः ॥ ९४ ॥

इति पेशलं वचनमस्य तदा
विनिशम्य पुष्पधनुषा विधिवत् ।
सहसा कृतोपकरणः सरसं
रतिपाणिपीडनविधिर्व्विदधे ॥ ९५ ॥

सकटाचलात्सुरवरात्प्रणता—
द्वरकामधेनुमथ पुष्परथम् ।
स वसंतसङ्गतमवाप्य कृती
निजलीलया निरगमत्स वनात् ॥ ९६ ॥

रतिसंयुतस्य मदनस्य रथा—
त्पुरतो दधावुरतिदीनमुखाः ।
विदुषां वदन्त इव ते प्रकटं
सुकृताद्भवन्त्यनुचरा रिपवः ॥ ९७ ॥

इति षोडशप्रवरलाभयुतं
मदनं विशन्तमवगम्य पुरे ।
अतिकौतुकात्सरललोलदृशः
पिदधुर्गवाक्षपदवीं वदनैः ॥ ९८ ॥

नृपवीथिसौधतलहस्तनखं
प्रवितन्य तस्थुरपरा वनिताः ।
स्मररूपदर्शनविलोलदृशः
सहसा परस्परनिपीडनतः ॥ ९९ ॥

श्लथकेशपाशपिहिताग्रदिशं
किमु तिष्ठसि प्रसृतबाहुयुगा ।
पुरतोपगच्छ मम देहि पदं
इति तत्र काचन जगाद पराम् ॥ १०० ॥

सखि दृश्यते कुसुमचापभृतो
नयनामृतं यदि न रूपमिदम् ।
नयनद्वयं विफलमेव भवे-
न्ननु दृश्यदर्शनममुष्य फलम् ॥ १०१ ॥

निविडोरुपीवरनितम्बभरा—
त्सहसा प्रयातुमसहामपरा ।
मकरध्वजेक्षणसमुत्कदृशं
स्वयमुत्सुका प्रियसखीमवदत् ॥ १०२ ॥

परमाणवोपि खलु ते सुभगा
वपुरस्य यैः कृतमनन्यसमम् ।

ननु पूर्वजन्मनि तयैव कृतं
सुकृतं ययायमुदरेण धृतः॥ १०३ ॥

रतिकामयोर्युगमश्रृणम परं
विषयीकृतं तदधुनाऽऽत्मदृशा ।
दयितेयमत्र खलु पुण्यवती
सखि चास्य निर्वृतिकरी भविता ॥ १०४ ॥

शिथिलाम्बराहितकराः सुदृशः
श्लथकुन्तलाग्रविगलत्कुसुमाः ।
कुचमण्डलात्रुटितहारलता
मदनं दधावुरवलोकयितुम् ॥ १०५ ॥

कटकं श्रुतिप्रणयिहारलतां
कटिसूत्रधामनि चकार परा ।
अथवा विमोहयति पञ्चशरो
न हि वेत्ति काचिदपि योग्यपदम् ॥ १०६ ॥

तनयं विलंव्य परिषज्य तथा
सितपुष्पसायकशरैः क्षतया ।
सुदृशा कयाचिदभि पञ्चशरं
प्रकटीभवत्कुचमवंधि कचः ॥ १०७ ॥

इति वल्गुवादिनि पुरन्ध्रिजने
नवकामदर्शनपिशाचवशे ।
विदधाति चेष्टितमनेकविधं
प्रविवेश वेश्म नृपतेर्मदनः ॥ १०८ ॥

श्लथकेशपाशपिहिताङ्घ्रियुगं
नमतिस्म पुष्पविशिखः पितरम् ।
स च तं तदा विजयिनं मुदितः
परिरभ्य मूर्द्धनि चुचुम्ब नृपः ॥ १०९ ॥

तदनन्तरं च जनकानुमतो
नयवाञ्जगाम जननीनिलये।
नतमौलिचुम्बितपदाम्बुरुहं
विनयात्प्रणम्य निपसाद पुरः ॥ ११० ॥

विनतस्य तस्य च वितीर्य मुदा
जननी समाशिपमथैक्षत तम्।
नवयौवनं सकललाभयुतं
धवलीकृतत्रिभुवनं यशसा ॥ १११ ॥

मृदुभङ्गुरायतसुनीलकचं
धवलायतासितविलोलदृशम्।
विधुविम्बकान्तवदनं सुभगं
पृथुवक्षसा विजितमेरुतटम् ॥ ११२ ॥

मृगराजमध्यमिभनाथगतिं
कनकावदातवपुषं गुणिनाम्।
सकलोपमाननिचयेन कृतं
विधिना ध्रुवं सुभगमस्य वपुः ॥ ११३ ॥

इति यावदस्य विकसन्नयनं
वपुरीक्षते हृतमनोनयना।
अथ मर्मभेदिभिरनंगशरैः
हृदि ताडिता खचरराजवधूः ॥ ११४ ॥

हिमलम्भिताम्बुरुहदीनमुखा
विरहानलेन परितप्ततनुः।
करपल्लवार्पितकपोलतलां
गलिताश्रु शोचितुमुपक्रमते ॥ ११५ ॥

नवयौवनं लवणिमानुगतं
सकलाकला निरुपमो विभवः।

विफलं भवेन्मम समस्तमिदं
यदि सेव्यते न हि मिथः सुभगः ॥ ११६ ॥

मुखपङ्कजं मुखसुगन्धि यया
न हि पीयतेस्य सरसं सुदृशा ।
अथ हन्ति या प्रणयकोपवशा—
द्वतंसकैर्न च न तं प्रमदा ॥ ११७ ॥

कृतगोत्रभेदविवशं रमणं
कुपिता नियम्य सिवयेन दृढम् ।
श्रवणोत्पलेन वदनाभिमुखं
परिताड्य रोदिति न या सुचिरम् ॥ ११८ ॥

प्रमदा न सा सुभगता वसति—
र्न चकास्ति सा बहुपुरन्ध्रिजनैः ।
इति यावदुत्सुकमनाः खचरी
सुचिरं विचिन्तयति कर्मवशात् ॥ ११९ ॥

मदनोपि तच्चरणपङ्करुहं
प्रणिपत्य तावदतिमुग्धमनाः ।
मुदितस्तदीयमनसा सहितो
निजसौधमुच्छ्रितपताकमगात् ॥ १२० ॥

निजधाम राजतनयेथ गते
सरसायकैः क्षतसमस्ततनुः ।
विरहव्यथां न हि विषोढुमलं
विगतत्रपा कृतविकारभरम् ॥ १२१ ॥

प्रविलोकते कुचतटं विवशा
बहु जृम्भते शिथिलकेशचया ।
सहसा विभूषणमपास्य च सा
स्वमथो विनिन्दति विविग्नमनाः ॥ १२२ ॥

अथ केशपाशमवकीर्य तरां
सहसा बबन्ध च पुनः क्षणतः।
करपङ्कजस्थितमुखाम्बुरुहा
शनकैर्जगौ किमपि शून्यमनाः॥ १२३॥

कदलीदलैर्मलयजैर्जलजै—
र्घनसारहारहिमरश्मिकरैः।
न हि निर्ववौ खचरराजवधू—
र्विरहे भवेत्किमथवा सुखदम्॥ १२४॥

अपरेद्युराप्तवचनात्त्वरितं
तनयोपि रोगपरिबोधपटुः।
स शरीरकारणमकाण्डभवं
विनिशम्य मातुरगमत्सविधम्॥ १२५॥

विरहव्यथाविधुरतामिति तां
शयनस्थितां समवलोक्य तदा।
न खलु त्रिदोषभव एष गद
स्वमतर्कयन्नरपतेस्तनयः॥ १२६॥

इति यावदास्त सुचिरं विविधं
परिचिन्तयन्गादनिमित्तमसौ।
मदनालसा प्रकटितावयवा
समुवाच सा रहसि तावदमुम्॥ १२७॥

खदिराटवीगिरिगुहाविवरे
विभुना समं विलसितुं गतया।
जननान्तरोपचितपुण्यवशात्
त्वमलंभ्यवर्द्धि च मयादरतः॥ १२८॥

प्रथमानुरागनवयौवनयो—
रसमस्य चापि वपुषः सदृशम्।

कुरुषे न चेत्सुभग नूनमियं
रमणीहतिस्तव भवेद्विषमा ॥ १२९ ॥

उभयत्र निन्द्यमिति तद्वचनं
स निशम्य कम्पितशिरो जगदे।
अपि नैव चिन्त्यमिदमम्ब भवे—
दभिष्यते किमु कुलप्रभवैः ॥ १३० ॥

विपथादितोम्ब विनिवार्य मनो
यशसे यतस्व कुलमार्गरता।
इति मातरं समभिधाय मुहु—
र्जिनमन्दिरं मकरकेतुरगात् ॥ १३१ ॥

सकलश्रुताम्बुनिधिपारमितं
वरसागरेन्द्वभिधया प्रथितम्।
स ददर्श तत्र मुनिसङ्घनुतं
परमावधीक्षणमपास्तभयम् ॥ १३२ ॥

प्रणतिं विधाय च निषद्य पुरः
समवाप्य चान्तरमुदारवचाः।
स जगाद गोप्यमपि मातृमनः
सविकारमात्मनि मुनेः शनकैः ॥ १३३ ॥

समुवाच तं यतिपतिर्मधुना
भवतेयमन्यजननेऽपहृता।
शशिरोचिरित्यभिधया प्रथिता
तपसा च तेन समवाप दिवम् ॥ १३४ ॥

अनुभूय तत्र च सुखं सुचिरं
शितिसंवरस्य विजयार्द्धगिरौ।
अवरोधरत्नमभवद्दयिता
कनकस्रगित्यभिधयानुगता ॥ १३५ ॥

इति यावदत्र कतिचिद्दिवसा—
न्ययतिस्स सा परमदुःखसहा ।
चिरजीवितः किल स एव मुनिः
समवाप तावदवबोधनिधिः ॥ १४९ ॥

हिमवायुदुःसहतरे शिशिरे
दिवसात्यये वटतरोः सविधे ।
विजिताङ्गजोऽप्रतिमधैर्यनिधि—
र्ददृशे स्थितः प्रतिमया स तया ॥ १५० ॥

शिशिरानिलाहतिसहिष्णुममुं
मशकाद्युपद्रवमवेक्ष्य तदा ।
कृपया च सास्य वटजीर्णदलै—
श्चरणौ पिधाय निजगेहमगात् ॥ १५१ ॥

अथ तां प्रभातसमये प्रणतां
परिपूर्णयोगविधिराह मुनिः ।
द्विजवल्लभे शुभतमे तनये
कमलाभिधे तव परं कुशलम् ॥ १५२ ॥

विनिशम्य नाम मुनिनोक्तमसौ
समचिन्तयच्च किमिदं न मया ।
श्रुतमास्त यावदिति तावदभू—
त्स्मृतपूर्वजन्मकृतकर्मफला ॥ १५३ ॥

भगवन्मुने कथमहं विदिता
मयि ते कृतागसि कुतः करुणा ।
अपकारकेष्वपि भवत्यथवा
सदयं मनो मुनिजनस्य परम् ॥ १५४ ॥

किमु जातिहीनमनुजत्वमिता
करवै विभो कथय मेऽद्य गतिः ।

इति साश्रुलोचनमिमां वदतीं
यतिराह साध्वि भव धीरमतिः ॥ १५५ ॥

निजकर्मणामिह सदा वशग—
स्तनुमान्यदा भवति पुत्रि तदा ।
किमु शोच्यते त्वमधुना तु शुभे
गृहिधर्ममेव हि विधेहि परम् ॥ १५६ ॥

जिनमार्गसाधुषु कृतापकृतेः
फलमित्यवेत्य भव शान्तमनाः ।
इति तां विनीय स जगाम यतिः
नगरं च कोशलमवापदियम् ॥ १५७ ॥

नगरे च तत्र जिनमार्गरतां
विषयेष्वसक्तहृदयां परमाम् ।
गणिनीमवाप्य चिरकालमसौ
विधिना निनाय गृहधर्मरता ॥ १५८ ॥

विविधैस्तपोभिरतिघोरतरै—
स्तनुतां गता च वरराजगृहम् ।
अधि तद्धराधरगुहाविवरे
मृतिमाप्य षोडशदिवं समगात् ॥ १५९ ॥

त्रिदशाधिपस्य रमणीत्वमियं
समवाप तत्र पुरुपुण्यवशात् ।
चिरकालतश्च्यवनमेत्य ततः
समभूच्च कुण्डिनपतेर्दुहिता ॥ १६० ॥

वररुक्मिणीत्यभिधया प्रथिता
दमघोपजाय च सजातिरदात् ।
सहसानुरक्तहृदयाच्च ततो
हरिणा हृता युधि निहत्य रिपून् ॥ १६१ ॥

तनयस्तयोर्गुणनिधिस्त्वमभूः
शिखिबालकस्य च यतोन्यभवे ।
कृतवान् रुषा किल वियोगवतीं
जननीं वियोगमगमस्त्वमतः ॥ १६२ ॥

इति तन्निशम्य यतिनाथवचो
मुदितः प्रणम्य च स तत्कुशलः ।
जननीगृहं समगमत्त्वरितं
कृतसत्क्रियश्च निषसाद पुरः ॥ १६३ ॥

तमसौ निशाम्य परितुष्टमना
वदतिस्म काम यदि मे कुरुषे ।
वचनं ततो नियतमेव दिशे
पुररोहिणीप्रभृतिमन्त्रगणम् ॥ १६४ ॥

किमु ते कदाचिदपि तन्वि वचो
न कृतं यदेवमतिमामवदः ।
गुरुविद्यका वितर देवि तत—
स्तव किङ्करोस्मि यत आमरणात् ॥ १६५ ॥

विनिशम्य सा वचनमस्य तथा
विनयानताय मदनाय परम् ।
वरविद्यकाद्वयमदाद्विधिना
परितोषमाप्य च जगाद स ताम् ॥ १६६ ॥

गिरिकन्दरेऽतिविषमे रिपुणा
पिहितस्य नो मम तदा सविधे ।
जननी न चापि जनकः शरणं
शरणं त्वमेव ननु नास्त्यपरः ॥ १६७ ॥

तनयस्य यच्च करणीयमिति
प्रतिपाद्य तां निजनिकेतमगात् ।

स्वमवेत्य वञ्चितमथास्य शठा
समचिन्तयद् द्रुतमपायममुम् ॥ १६८ ॥

करजैर्विदार्य कुचकण्ठकरा—
नयनाम्बुधौतगुरुहारलता ।
अतिदुःखिता किल निकारवशा—
द्ददतिस्म सा पतिमुपेत्य रुषा ॥ १६९ ॥

परिपालनाय भवतैव वने
शिशुरर्पितः करुणया मम यः ।
विहितस्तदेव च युवेशपदे
प्रविलोकतास्य करणीयमदः ॥ १७० ॥

कुलमस्य चेदमलमस्ति विभो
किमपास्यतेऽधिवनमेष जनैः ।
तव पुण्यतश्च निजशीलमिदं
परिरक्षितं कथमपीह विभो ॥ १७१ ॥

मम जीवितेन किमु नाथ परं
तव शुद्धवंशमलभूततनोः ।
यदि वीक्ष्यतेस्य न शिरःकमलं
रुधिरारुणं धरणिपीठतले ॥ १७२ ॥

इति वल्लभोक्तमवधार्य नृप—
स्तनयान्प्रचण्डमनसो निभृतम् ।
निजगाद दुष्टतमकाममम‍ुं
नयताविचारमधुना निधनम् ॥ १७३ ॥

समचिन्तयंस्तदपि चापचितं
मुदितास्तदेति सहसैव खलाः ।
जनतापवादचकिताश्च ततः
पृथुवापिकामनु विनिन्युरमुम् ॥ १७४ ॥

उपनीय तत्र किल यावदिमे
कृतसंविदो जगदिरे मदनम् ।
श्रवणेऽस्य तावदहितं कथितं
हितविध्यया सलिलमज्जनकम् ॥ १७५ ॥

जलकेलिमज्जनविधावथ तां
सहसा नियुज्य निजवेशधरीम् ।
रिपुसंहतेर्विविदिषुश्चरितं
स तिरोदधे द्रुतमशंकमनाः ॥ १७६ ॥

गुरुनादपूरितककुब्विवरं
मदनः पपात पयसि प्रथमम् ।
निधनं रिपुं नयत तूर्णमहो
पतिता वदन्त इति तेपि जले ॥ १७७ ॥

रिपुकृत्यमीदृशमवेक्ष्य रुपा
पृथुवापिकां स पिदधे दृषदा ।
उदलंवयच्च विपरीतशिरां—
स्तदधो रिपून् प्रसभमार्त्तरवान् ॥ १७८ ॥

उपविश्य तत्र गुरुधैर्यनिधिः
प्रजिघाय पुत्रमवनीशसुतः ।
कथयेति सोपि निजगाद तथा
चलितः क्रुधा नरपतिः स यथा ॥ १७९ ॥

रथकट्यया[1] गिरिपतीन्दलयं
समयंस्तुरङ्गमखुरोच्छरयन् ।
सकलं जगत्करटिदानजलैः[2]
स्थगयन्पदातिनिवहैश्च धराम् ॥ १८० ॥

---

१ रथसमूहेन । २ हस्तिमदजलैः ।

करटीन्द्रगर्जितधनुर्ध्वनिभि—
हयहेषितैश्चरणतूर्यरवैः ।
व्यथयंश्च कर्णविवराणि भृशं
नृपतिः क्रुधास्य सविधं समगात् ॥ १८१ ॥

मदनोपि तद्रिपुवलं निकटे
समवेक्ष्य सस्मितमुखाम्वुरुहः ।
प्रविधाय सैन्यमरिचक्रसमं
निजविद्यया समचलच्च रुषा ॥ १८२ ॥

तुरगा हयान् गजघटांश्च घटा
रथिनश्च दुर्दममहारथिकान् ।
समगुः क्रुधा युधि भटांश्च भटा
इति सेनयोः समभवत्समरः ॥ १८३ ॥

पतितैर्गजैस्तुरगिभिश्च हतैः
परितै रथैर्विहतसूतहयैः ।
अतिभीषणं समवलोक्य युधं
नटतिस्म खे सुरमुनिर्मुदितः ॥ १८४ ॥

अथ कालसम्वरवलेन निजं
मकरध्वजो जितमवेक्ष्य वलम् ।
चलदञ्जनाचलनिभैर्द्विरदै
रभसा चचाल चलयन्धरणीम् ॥ १८५ ॥

वीरैः सद्योधैः पातिता योधमुख्याः
स्थूरीपृष्ठौघैः सादिनः सादिताश्च ।
नागैर्नागेन्द्रा वीरभूपैश्च भूपाः
सर्वे खेटौघा मायया सम्प्रयुध्य ॥ १८६ ॥

विश्वं सैन्यं पातितं स्वं निरीक्ष्य
दुष्टारातिं दुर्जयन्तं पुरस्तात् ।

विद्ये भार्यां याचितुं खेचरेन्द्रः
प्रज्ञप्त्याख्यां रोहिणीमप्ययासीत् ॥ १८७ ॥

रहस्यवादीदिति तां स मुग्धः
प्रयच्छ शीघ्रं मम देवि विद्ये ।
हत्वा हठाद्येन सपत्नमुच्चै—
र्मनोरथांस्ते सफलीकरोमि ॥ १८८ ॥

पालयिष्यति स मां किल पुत्रः
पश्चिमे वयसि नाथ मयापि ।
स्तन्यमिश्रमतिमोहवशेन
विद्ययोर्द्वयमदायि पुरैव ॥ १८९ ॥

ज्ञात्वा वृत्तान्तं योषितश्चेष्टितेन
शीघ्रं निर्गत्यानङ्गवीरेण साकम् ।
दिव्यैः सामान्यैः सोऽस्त्रशस्त्रैर्महात्मा
भूभृन्मानी यो युद्धवान्वद्धरोपः ॥ १९० ॥

दोर्दण्डमण्डलितचापकराश्रिरेण
व्यस्त्रीचकार नृपतिं रणकेलिदक्षः ।
नीत्वात्मनः सविधमास्त च यावदेवं
लज्जाकुलः किमपि नम्रमुखः शुशोच ॥ १९१ ॥

तावत्सम्प्राप्य व्योमतो नारदोऽस्मै
दत्वा सद्वाक्यैराशिषं नामकर्त्रे ।
स्थित्वा तस्याग्रे ज्ञातवृत्तोपि दाक्ष्यात्
युद्धं किंवा जातमित्यभ्यपृच्छत् ॥ १९२ ॥

तद्वचश्च विनिशम्य यथावत्
पुष्पकेतुरवदत्तमुदन्तम् ।
पाणियुग्मपिहितश्रवणः सन्
धौतमस्तकमवोचत साधुः ॥ १९३ ॥

चक्रवाकसमवृत्तिर्जीवितं
वल्लभं पितरमात्मजं गुरुम् ।
मृत्युमानयति दुष्टकामिनी
कोपितान्यमनुजे नु का कथा ॥ १९४ ॥

विष्णुः श्रीहरिवंशभूषणमणिश्चक्राङ्कलक्ष्मीपति-
र्हंसारातिवधूमुखाम्बुजविधुः कल्पद्रुमो योऽर्थिनाम् ।
कीर्तिव्याप्तजगत्त्रयश्च जनकः ख्यातस्त्रिखण्डाधिपो
भर्तुः प्राणगरीयसी गुणपदं माता च ते रुक्मिणी ॥ १९५ ॥

सत्यया सह सपत्निविरोधो
मातुरस्ति तव पुत्र नितान्तम् ।
अन्वयादिति निशम्य मुनेः स्वं
तोषमापदधिकं विषमेषुः ॥ १९६ ॥

प्रकटितसकलार्थान्नारदाल्लब्धबोधो
जनविदितसुवृत्ताद्भूरिभासां निवासात् ।
स्मृतमुनिपतिवाक्यो मन्मथोऽभात्तदानीं
दिनकरकरसङ्गात्पद्मखण्डो यथैव ॥ १९७ ॥

इति श्रीसिन्धुराजसत्कमहामहत्तमश्रीपप्पटगुरोः पण्डित-
श्रीमहासेनाचार्यकृते प्रद्युम्नचरिते अष्टमः सर्गः ॥ ८ ॥

## नवमः सर्गः ।

पितरं कनकस्रजान्वितं
मदनो द्वारवतीं व्रजन्पुरीम् ।
प्रणिपत्य जगौ विमृष्यतां
ननु दुर्वृत्तमिदं शिशोर्मम ॥ १ ॥

मातः क्रियतां च नः प्रसादो
दुष्कर्मोदयजातदुष्टबुद्धेः ।
को वा परतन्त्रकेषु कोपं
धीमान्न कुरुते जनाग्रभूतः ॥ २ ॥

स्वभ्रातॄन्पितरं स्वमातरं
पौनःपुन्यमतीव सादरम् ।
स स्नेहमतिः प्रणम्य तान्
तद्देशाच्चलितः सनारदः ॥ ३ ॥

निर्गत्य ततो जगाद तं
साधुं काम इति प्रियोक्तिकः ।
मानार्ह विमानमाशुगं
सन्मानं कुरु सत्वरं विभो ॥ ४ ॥

ललितं सुविशालमद्भुतं
स विधायाह विमानमङ्गजम् ।
यदि ते रुचितं मनोभव
द्रुतमारोह विरोधवर्जितम् ॥ ५ ॥

इति तद्वचनात्किलादरात्
त्वरितं तत्र पदं ददेंगजः ।

त्रुटिताखिलसन्धितत्क्षणा—
    त्तदभूच्छिद्रशतैरलङ्कृतम् ॥ ६ ॥

इति तत्स विलोक्य सस्मितं
मुनिमाहार्यमहामतिर्भवान् ।
    अतिशिल्पविशेषकोविदो
भवतां नास्ति जगत्त्रये समः ॥ ७ ॥

    वचनं तदतीव पेशलं
मदनोक्तं विनिशम्य नारदः ।
    अयि वत्स जराधिकस्य मे
निपुणत्वं कुत इत्यवोचत ॥ ८ ॥

कुशलस्तरुणोसि सत्वरं
    कुरुषे किं न विमानमुत्तमम् ।
जननी तव दुःखिता परं
    किमु कालं गमयस्यनर्थकम् ॥ ९ ॥

व्रतिनो वचनात्तदाद्भुतं
    मदनो विस्मयनीयमीदृशम् ।
विदधेथ विमानमद्भुतं
    यशसः पुञ्जमिवात्मनः स्थिरम् ॥ १० ॥

उच्छ्रितध्वजसमाकुलमञ्चं
    मौक्तिकस्रगनुलम्बितघंटम् ।
पञ्चवर्णमणिनिर्मितकूटं
    हाटकोज्ज्वलकटीतटपीठम् ॥ ११ ॥

चक्रवाकगरुडादिविहंगैः
    प्रोलसद्धरिपुरस्सररूपैः ।
तालशालकदलीप्रतिरूपैः
    हारिचित्रचमरावलिजालैः ॥ १२ ॥

किङ्कणीध्वनिभिरन्वितमन्यै—
रंगिभिर्दुरुपलभ्यमपुण्यैः ।
आरुरोह च विमानमनंगो
नारदेन सहितः स विलम्बी ॥ १३ ॥

तं विलम्बिनमथाह नारद—
स्त्वद्वियोगगुरुशोकविक्लवाम् ।
वत्स गच्छ पुरमुत्कयादवां
किं न धीरयसि धीर मातरम् ॥ १४ ॥

तद्गिरं समुपकर्ण्य मन्मथो
नारदं वरविमानवर्तिनम् ।
क्रीडयेति विदधे समाकुलं
स्रस्तपिंगलजटं सवेपथुम् ॥ १५ ॥

वत्स वत्स मकरध्वज काम
व्याकुलो मुनिरकारि विमाने ।
स्नेहभारविवशीकृतचेताः
किं त्वया मुदितमानसकेन ॥ १६ ॥

रुक्मिणी मम सुतेव वत्सला
पूजितोस्मि पितृवत्पितुस्तव ।
यादवैरपि तथैव भक्तितः
कर्तुमीदृशमतो न साम्प्रतम् ॥ १७ ॥

तन्निशम्य वदतिस्म मन्मथः
सस्मितं तव मनोपि लक्ष्यते ।
नैव तात विगतक्रियं क्षणा—
दित्युदीर्य गगनेपि तद्व्यधात् ॥ १८ ॥

तद्विमानमथ दूरमम्बरे
स्तम्भितं समवलोक्य नारदः ।

खेटलोकमपहातुमुत्सुको
नो भवानिति रुषा बभाण तम् ॥ १९ ॥

तत्तथा स्थितमवेक्ष्य विमानं
तं मुनिर्वदति काम जनित्री ।
सा गता परिभवं यदि पूर्वं
किं करिष्यसि गतः खलु पश्चात् ॥ २० ॥

यद्यपि प्रियतरं न मात्रिकं
कार्यमन्यदुरु ते हितं ब्रुवे ।
कन्यका हि बहवो निवेदिताः
प्राक्त्वारिरनुजो हरिष्यति ॥ २१ ॥

श्रोत्रहारि वचनं निशम्य त—
द्वायुवेगचलितोऽर्धकेतनैः ।
यादसाम्पतितरंगचञ्चलै—
राततं व्यमुचदङ्गजो हरेः ॥ २२ ॥

अथ विमानमचालि मनोभुवा
नभसि वामदृशां नयनोत्सवम् ।
विकसिताननारदशोभितं
द्रुतविलम्बितया क्रियया युतम् ॥ २३ ॥

खचरवासमहीधरलङ्घनं
सपदि तौ प्रविधाय मनस्विनौ ।
वनधराधरसिन्धुपुरव्रजै—
र्ददृशतुश्च महीतलमाकुलम् ॥ २४ ॥

मुकुलकुसुमपुष्पन्मत्तभृङ्गालिछन्नं
क्षितिरुहचलपक्षिव्याकुलां मालिनीं याम् ।
खदिरपदसमेतां चाटवीं पश्य यत्र
कुपितसुरविपक्षेणार्भकस्त्वं विमुक्तः ॥ २५ ॥

श्रवणशुभगं घंटानादं कलं गगनोन्मुखं
चपलशिशुकं श्रुत्वा वेगात्प्रयाति पुनः स्थिरम्।
हरति हरिणीवृन्दं चेतोमनोरमचेष्टितं
चपलललितं क्रीडारम्यं मनो न हरेत्कथम्॥ २६॥

उत्फुल्लास्यं व्याततपक्षं कृतकेकं
नृत्यासक्तं मन्थरपादं वनगुञ्जे।
गुञ्जन्मत्तैर्भृङ्गसमूहैः कृतगीतैः
पश्योत्कंठं मत्तमयूरं मदनेमम्॥ २७॥

दंष्ट्रातीक्ष्णनखाभिपाटितबृहत्संरब्धकोलव्रजं
तन्मांसाशनरक्तपानभयकृत्पश्चाच्चलद्वालधिम्।
नादाकम्पितशैलरन्ध्रगहनं भीमं मनोहारिणं
पश्य त्वं मकरध्वज क्षणमिदं शार्दूलविक्रीडितम्॥ २८॥

स्तम्बेरमान्मदजलार्द्रकपोलमूलान्
गुञ्जन्मदालिशितचामरकर्णतालान्।
वंशोन्नतान् स्थिरगभीरजलाशयेषु
पश्याम्बु मन्मथ पुरः समदं पिबन्तः॥ २९॥

गुरुवंशमनन्तसत्वयुक्तं
स्थिरमत्युन्नतिशालिनं महान्तम्।
स्वसमानमनन्तरवन्हिसेव्यं
पश्य त्वं नगमेकमन्तिकस्थम्॥ ३०॥

उपतटस्थितदिव्यमहीरुहां
कुसुमपुञ्जरजःसुरभीकृताम्।
मकरमीनकुलीरसमाकुलां
दिचमगाधजलामनुकुर्वतीम्॥ ३१॥

---

१ छंदसोपि नाम।

घनतरैरुपरञ्जितवारिभिः
परिमलैरुपरिस्थितखेचरी ।
सलिलकेलिमधो विवृणोति या
खतटिनीमिव पश्य धुनीमिमाम् ॥ ३२ ॥ युग्मम् ।

विमलवारितरंगमनोहरां
मदन पश्य पुरः सुरनिम्नगाम् ।
पृथुनितम्बनिविष्टसुराङ्गनां
मधुरगीतवशीकृतकिन्नरीम् ॥ ३३ ॥

इति निदर्शितवस्तुकुतूहला—
त्सुसमतीत्य शनैः कियदन्तरम् ।
रथगजाश्वपदातिसमाकुलां
समवलोकितवान्स वरूथिनीम् ॥ ३४ ॥

चक्रनाथकटकावभासिनीं
तां विलोक्य सहसा सविस्मयः ।
तात कस्य पृतना विलोक्यते
पृच्छतिस्म मुनिमादरादिति ॥ ३५ ॥

वत्सास्ति हास्तिनपुरं प्रथितं प्रथिव्यां
तत्राभवन्नरपतिः पुरुदेवतीर्थे ।
यो दानतीर्थमुपदर्श्य पुरा जनानां
श्रेयानिति प्रथममास यथार्थनामा ॥ ३६ ॥

तद्वंशभूषणमणिर्नृपतिर्बभूव
भूपालमौलिमणिरश्मिचयार्चितांघ्रिः ।
यत्संज्ञया समभवत्कुरुवंशनामा
वंशः प्रसिद्ध इह भूवलये समस्ते ॥ ३७ ॥

बहुष्वतीतेषु नृपेषु तत्र
वंशे धृतो नाम बभूव राजा ।

रामाश्च तिस्रोथ बभूवुरंबा
तस्यांबिकांबालिकया सहान्या ॥ ३८ ॥

अजनिष्ट तासु नृपतिस्तनयान्
धृतराष्ट्रपाण्डुविदुरान् क्रमशः ।
प्रथमोत्र सूनुशतमापदिह
प्रमुखः सुयोधन इति प्रथितः ॥ ३९ ॥

त्यागशौर्यगुणरञ्जितलोकान्
पाण्डुभूपतिसुतानपहस्त्य ।
बुद्धिकौशलवशेन स मानी
राज्यमाप नमितप्रतिभूपम् ॥ ४० ॥

धिष्ण्यपत्रयजनातिगशोभा
रूपयौवनकलागुणपात्रम् ।
उन्नतामलकुलाचलगङ्गा
तत्सुतोदधिरिति प्रथितास्ति ॥ ४१ ॥

रूपं सच्चरितं वचो मधुरतां विद्याविशेषं तथा
लावण्यं पुनरीक्षणे क्षणरुचिव्याभासि भामण्डलम् ।
बोधं बोधितलोकवृत्तमखिलं लीलावशिष्टां गतिं
तस्याः कः खलु भाषितुं त्रिभुवने शक्तः कृती प्राकृतः ॥ ४२ ॥

पूर्वमेव भवतो भविष्यतो
भाविनीयमभवन्निवेदिता ।
किं वदन्त्यपि न ते यतः श्रुता
प्रेष्यता तव कनीयसे ततः ॥ ४३ ॥

इति निशम्य स तद्वचनं तदा
परमतोषमवाप्य च सत्वरम् ।
निजकलत्रनिरूपणकेलिना
समभवत्क्षणतः शबरो वने ॥ ४४ ॥

विरलवक्रबृहद्दशनावलि—
गुरुललाटकपोलभयावहः ।
व्रततिवेष्टितभीषणजूटक—
श्चपलरक्तविलोचनतारकः ॥ ४५ ॥

करिकरोपमभीमभुजोरुकः
पृथुकटिः कठिनोन्नतवक्षसा ।
स्थगितदिग्भ्रूकुटी कुटिलालक—
स्तम इवाभिगतं मनुजाकृतिम् ॥ ४६ ॥

तमवलोक्य जगुर्नृपमानवाः
समुपहस्य कुमारवयोधराः ।
अपसरेति कठोरवचोन्विताः
त्वमिह तिष्ठसि भद्र कुतः पथि ॥ ४७ ॥

समवदत्कुपितोऽथ वनेचरः
हरिनियोगवशात् स्थितिवानहम् ।
उचितशुल्कहरः शवरोस्मि मे
प्रतिवितीर्य व्रजन्तु भवज्जनाः ॥ ४८ ॥

भवति किं तव वस्तु नियोगतः
समुपलभ्यमहो वद सत्वरम् ।
इति जगुर्हरिविप्रियवर्जिनो
मृदुतया सहिता हि भटास्तदा ॥ ४९ ॥

करिकरेणुतुरङ्गमवस्तुषु
यदिह सारतरं प्रतिगृह्यताम् ।
वयमतीव सुखेन यतो वनात्
कुशलतः प्रतियाम इतो द्रुतम् ॥ ५० ॥

स च जगाद यदत्र भवेद्वरं
तदिह मे प्रतिदाय गता यदि ।

न हि स्पृह्नि पुनः स्थिरनिश्चयः
कुपथकारि कुलं न हि मे भटाः ॥ ५१ ॥

इह यदुत्तमवस्तुसुखावहं
तदभिवाञ्छसि चेद्गुणशालिनीम् ।
प्रतिगृहाण सुतां नृपतेरिमा—
मिति हसद्भिरसौ जगदे भटैः ॥ ५२ ॥

वदति तान् शवरो यदि सा वरा
मम वितीर्य वधूं व्रजताधुना ।
न हि भयं भवतां विपिने घने
क्वचिदपीह भवत्यरिभीषणे ॥ ५३ ॥

समुपगृह्य वधूं सकलाञ्जनान्
विजहतो मम पश्यत धीरताम् ।
वचनमेव हरेरपि तादृशं
ग्रहणमेकतमस्य हि वस्तुनः ॥ ५४ ॥

इति जगाद वनेचरवेषभाग्
हरितनुप्रभवो मतिसत्तमः ।
जगुरिमे हरिणा किमु जातवान्
त्वमिह येन हरेरुदधिं वलात् ।
अकृतपुण्यजनैर्न हि लभ्यते
वरवधूर्मनसापि गतत्रप ॥ ५५ ॥ [ षट्पदं ]

कपिलकेशभृतोरुणचक्षुषः
सितदतोऽसितकान्तिधरस्य ते ।
कठिनपीनघनस्तनमण्डला
वरवधूरियमेव समा न तु ॥ ५६ ॥

भृगुतटे विनिपत्य म्रियस्व भो
वनभग न हि जातिरियं तव ।

यदनया सदृशीं वनितां द्रुतं
ध्रुवमवाप्स्यसि नत्वियमाप्यते ॥ ५७ ॥

ग्रथिलमेनमतः क्षिपताग्रतो
व्रजत किं कुरुते कुपितो हरिः ।
न हि किराटकशुल्कगृहीतिवा—
न्नृपजने यतते मतिमाञ्जनः ॥ ५८ ॥

व्रजितुमेवमथाशु समुद्यता
रुरुधिरे धनुपातिविसर्पिणा ।
उभयकोटिनिरुद्धदिशा लस—
ल्ललितहासमुखस्य कराश्रिता ॥ ५९ ॥

प्रथमसूनुरहं हरिचक्रिणो
नृपतिरस्मि न किं वनवासिनाम् ।
ललितवेषधरो न भवामि किं
यत इयं न वधूर्मम दीयते ॥ ६० ॥

ननु हरेरपि तोष इतो भवे—
न्न च मया सदृशा हरिसूनवः ।
यदि बलादपि यातुमभीप्सवो
वदत यूयमहं च यते तथा ॥ ६१ ॥

इति निगद्य निजान्निजसंज्ञया
प्रतिसमान् जुहुवे कृतकुक्कः ।
तदनु शावरमावृतसर्वदिग्
विविधमाविरभूद्बलमुद्धतम् ॥ ६२ ॥

असितमूर्तिधरं निशितायुधं
लकुटकाष्ठशरादिपरिग्रहम् ।
जहि गृहाण कियत् क्व नु याति वा
द्रुतमिति ब्रुवदाप समन्ततः ॥ ६३ ॥

अरुणपल्लवचार्ववतंसका
विविधवृक्षफलैः कृतकण्ठिकाः ।
कपिलरूक्षविशीर्णशिरोरुहा
मलिनवस्त्रभृतोऽल्पतराक्षिकाः ॥ ६४ ॥

निखिलदेशरुधोथ वनेचराः
परिदधावुरनेकविधास्तथा ।
तदवलोकनतत्क्षणमाकुला
कुरुनरेशचमूरभवद्यथा ॥ ६५ ॥

असिशरासनकुन्तगदाभृतो
गजसुवाजिरथादिकवाहनाः ।
नृपसुताश्चलिता हि युयुत्सवो
जहति नैव भटाः समयं निजम् ॥ ६६ ॥

क्वचिदतित्रसनात्तुरगा निजान्
समभिपात्य नरानभिदुद्रुवुः ।
गतमदाः करिणो रवमुच्चकैः
परिविधाय वनेचरतो भयात् ॥ ६७ ॥

[१]त्रसनतुङ्गखराद्भुवि कुट्टिनी
पतितवस्त्रविभूषणविह्वला ।
युवजनैर्हसिता पतिता पर-
र्निजजनैः कृतशोकमहारवाः ॥ ६८ ॥

धृतविषाणयुगो वहुधा जनैः
शवरनादभयादतिभीषणात् ।
करुणनादकरोति वलाङ्कः
समभिरोपयितुं न ददे भरम् ॥ ६९ ॥

इति महाभयकम्पितसैनिके

१ त्रसनतुङ्गखरादतिकूर्दिनः, अयं पाठः खपुस्तके वर्तते ।

सति जने खरयानरथस्थिते ।
शवरकैरभियुध्य कुरोर्बलं
कृतरणं विजितं सहसा तदा ॥ ७० ॥

इति निपात्य भटान् क्षणतोऽखिलां-
स्तुरगनागरथानपि मायया ।
वरवधूमुपगृह्य दुराकृतिः
शवरवेषधरो वियदुद्ययौ ॥ ७१ ॥

भिल्लसंगरमहाभयाकुलां
संततश्वसितकम्पितस्तनीम् ।
तां विमानमुपनीय कन्यकां
नारदस्य पुरतो न्यवेशयत् ॥ ७२ ॥

तं तथाविकृतरूपधारिणं
सा विलोक्य गुरुदुःखविक्लवा ।
पश्य तात मम पूर्वदुष्कृतं
स्वं निनन्द मुनिसन्निधाविति ॥ ७३ ॥

येन नैव हरिसूनुरग्रिमो
नाभवत्तदनुजोपि वाञ्छितः ।
आ दुराकृतिरपाहरत्कथं
मामभाग्यवसतिं वनेचरः ॥ ७४ ॥

अम्ब नैव मरणे विलोकिता
तात मां विपदि किं न रक्षसि ।
बान्धवाः किमिति दुखभागिनीं
मां न पश्यत यतो न रक्षथ ॥ ७५ ॥

उद्धतश्वसितवेपितस्तन-
श्रस्तमम्बरमुदञ्चती मुहुः ।

पाणिपद्मपिहितास्यपङ्कजा
सा रुरोद भृशमुन्मनाश्चिरम् ॥ ७६ ॥

शवर एष कुतो नभसा गतिः
सुरवरोऽपि कृताकृतिरेष किं ।
दितिजभूतनिशाचरयोनिजो
यदि भवेत्तव सङ्गतिरस्य किम् ॥ ७७ ॥

वैरिणाहमिव दुष्टचेतसा
किं भवानिति हतो महामुने ।
वाचमित्थमभिधाय सुन्दरा
निश्चिकाय मरणं मुनेः पुरः ॥ ७८ ॥ युगलम् ।

पुरा पितृभ्यामुपकल्पितो यः
पतिस्तवैषोऽस्ति स पुत्रि सत्यम् ।
अलं रुदित्यावसरे मुदस्ते
युक्ता न शोकेन मृतिर्विधातुम् ॥ ७९ ॥

उक्त्वेति तां प्राह मुनिर्मनोजं
क्रीडा चिरं नो क्रियतेत्र वत्स ।
निजेन रूपेण मनोहरेण
विलोचनेऽस्याः सफली कुरुष्व ॥ ८० ॥

कनककुण्डलहारतिरीटस—
त्स्रगनुलेपनमङ्गदभूषितम् ।
भुवनभूषणमम्बुजसद्दल-
प्रतिमनेत्रयुगं नयनोत्सवम् ॥ ८१ ॥

कनकशैलनिभं कठिनोरसं
करिकरायतवृत्तमहाभुजम् ।
भ्रमरसंततिकुञ्चितकुन्तलं
स्थिरतरं मनसोपि भयोज्झितम् ॥ ८२ ॥

यन्निदर्शनमशेषजनानां
मर्त्यलोकनयनामृतभूतम् ।
तद्वपुः समवलोक्य मृगाक्षी
विस्मिता च हृषिता च बभूव ॥८३॥ विशेषकं ।

कमपि भावमभूतमवाप्य तौ
विविधकेलिसमुल्लसिताननौ ।
समनुरक्तपरस्परमानसौ
ददृशतुः पुरमुच्छ्रितकेतनम् ॥ ८४ ॥

उत्तोरणां द्वारवतीतिनाम्ना
निदर्शयामास मुनिः पुरीं ताम् ।
या नागराणां स्थितये विधात्रा
हृतेव साक्षान्नगरी सुराणाम् ॥ ८५ ॥

मज्जत्पुरन्ध्रिकुचकुङ्कुमपिञ्जराम्बु—
खातां सदा नरपतेरधिवासभूताम् ।
मत्तद्विपेन्द्रकरटच्युतदानवारि—
सञ्जातकर्दमसुदुर्गमराजमार्गाम् ॥ ८६ ॥

सायं सुधाधवलहर्म्यतलाधिरूढ-
सीमन्तिनीवदनसंशयितेन्दुविम्बा ।
तुङ्गप्रतोलिषु निवेशविनिर्गमाभ्या—
मायासिताखिलदिगागतलोकलक्ष्याम् ॥ ८७ ॥

मुक्तांशुलिप्तककुभः प्रचुरप्रवाला
निःसंख्यशङ्खवलयाः स्फुटरत्नभासः ।
यस्यामगस्तिपरिपीतपयश्च यस्य
सिन्धोः श्रयन्त्यविकलां श्रियमट्टवीथ्यः ॥ ८८॥

यस्यां मत्तभ्रमरमुखराः पादपा नित्यरम्याः
पद्मिन्योपि प्रतिदिशमलं पुष्पमालाभिरामाः ।

वाप्यः प्रायो मरकतशिलाबद्धभित्तिप्रदेशाः
स्वर्गी स्वर्गं त्यजति बहुधा वीक्ष्य यस्याश्च लक्ष्मीम् ॥ ८९ ।

जिनेन्द्रभक्त्या स्वयमेव यस्याः
कारापकोऽभूत्रिदशाधिनाथः ।
कर्त्ता च साक्षाद्धनदोऽनुरागा—
त्का वर्णनान्या क्रियतेऽपराऽस्याः ॥ ९० ॥

साभिज्ञं प्रतिवेश्म निश्चितमतिर्वीक्ष्येति तां मन्मथः
इत्थं नारदवाक्यतो नवनवं कुर्वन्महाकौतुकम् ।
स्तम्भित्वा गगने विमानमगमद् द्रष्टुं पुनस्तामसौ
भानुर्भानुरिव प्रतापनिलयो दृष्टस्तदाकस्मिकम् ॥ ९१ ॥

छत्रचामरविभूतिविशेषै-
स्तं लघूकृतजगत्त्रयमारात् ।
वीक्ष्य विस्मितमनाश्च स किञ्चि-
द्धियया मकरकेतुरवाचि ॥ ९२ ॥

वाजिवाहनकृतप्रतिकर्म-
वेष्टितो नृपसुतैः सवयोभिः ।
देव याति तव मातृसपत्न्याः
सूनुरेष उदयैकनिवासः ॥ ९३ ॥

प्रज्ञप्तिवाक्यमवधार्य सतोषमेता-
मश्वं विकृत्य चपलं वरलक्षणाङ्गम् ।
लम्बोदरोष्ठभुजमुच्चमतीव गौरं
स्वं स्थूलरूपमुपकल्पितवांश्च वृद्धम् ॥ ९४ ॥

श्रुत्वोवाच प्रश्रययुक्तं वचनं स
किं भो यूयं निष्ठुरचित्ता वनपालाः ।
दातुं शक्ता नो फलजातं कपिरेष
छित्वारण्यं याति बलान्मे न च दोषः ॥१२४॥

कश्चिद्विकम्पितशिरःकरपादयुग्म-
　　मुच्चैःश्रवःसममिमं तुरगं गृहीत्वा ।
चञ्चत्सपल्ययनमाट स तत्र यत्र
　　भानुः स्वयं कृततुरङ्गमवाहमास्ते ॥ ९५ ॥

अश्वः कस्य किमत्र धारयसि भो हेटावृकस्त्वं किमु
विक्रीणासि नु वा हयं स्वयमथो पप्रच्छ भानुस्तदा ।
तं प्रत्याह स वल्लभातनुभवस्त्वं चक्रपाणेः सुतो
योग्योऽयं ययुरन्यदुर्लभतमो यद्यर्थिता स्वीकुरु ॥ ९६ ॥

मूल्यं किमस्य स तमाह सुवर्णकोटी
　　किं नर्म नैव सुतरां तुरगः समर्थः ।
किं हस्यते सकलमेव हि वस्तु लोके
　　ग्राह्यं परीक्ष्य यदि कार्यमुतावधार्यम् ॥ ९७ ॥

एवं करोम्यार्य ससंभ्रमो द्रुतं
　　समारुरोहाश्वमतीव चञ्चलम् ।
अश्वोपि बभ्राम तथातिवेगतो
　　ऽनुरञ्जयामास यथास्य मानसम् ॥ ९८ ॥

भ्रान्त्वा सलीलमथ चक्रपदं ततोनु
　　वेगात्ततः पतितवस्त्रविभूषणं तम् ।
कृत्वा भयाकुलमधोक्षजसूनुमेवं
　　तस्थौ प्रपात्य च पुरोस्य हयो विनीतः ॥ ९९ ॥

अनेकराजन्यरथाश्वसंकुलं
　　महाभिमानैकधनं स पातितम् ।
विलोक्य भानुं कृतहस्तताडनः
　　प्रहस्य दक्षः सहसेति चावदत् ॥ १०० ॥

तव कीर्तिरशेषभूतलं
　　प्रतनोत्यश्वसुशिक्षयार्जिता ।

तदहं तुरगं महामते
वरमादाय भवन्तमाश्रितः ॥ १०१ ॥

न हि जातु हयस्य वाहना
क्रियते विष्णुसुतेन भानुना ।
वदतीति जनो यथा पुरा
तदशेषं स्फुटमेव नान्यथा ॥ १०२ ॥

इह वाहयते प्रशस्यशिक्ष-
स्तुरगान्ना स्थिरसत्कटिर्न चान्यः ।
अपि निपुणतरास्त एव लोके
हृदयं ये विदुरश्वकुञ्जरस्य ॥ १०३ ॥

अथवा हरिवल्लभाङ्गजस्य
स्थिरबुद्धेस्तव वाजिशिक्षयालम् ।
नैपुण्यत्वयशः कथं भवेत्तु
जगति प्राकृतयो निजस्य जातु ॥ १०४ ॥

उक्त्वेति हसन्तमाह भानु-
स्त्रपया क्रोधभरेण चाश्रितात्मा ।
यदि गर्वमतिः स्वमेव तुरगं
वाहय तात किमन्यथा वृथोक्तैः ॥ १०५ ॥

न हि वाहयितुं ममास्ति शक्ति-
र्भवतस्तेन तुरङ्गमर्पयामि ।
अथवा धृतवाहुकं प्रयत्नात्
यदि मां रोपयितुं क्षमाः समस्ताः ॥ १०६ ॥

सविशेषमहं तु वाहयामि
प्रसभं किं कुरुषेति मानवास्त्वम् ।
हरिपुत्र जयामि शिक्षयाहं—
हरिमप्यत्र कथैव का त्वया ॥ १०७ ॥

इति वाचमतीव गर्वसारां
हरिसूनुः प्रमदावहां निशम्य ।
निजभृत्यजनान् जगाद शक्ता-
निममारोपयतेति कौतुकेन ॥ १०८ ॥

उद्धृतः क्षितितलादथ टङ्को
माययोपरि पपात गुरुः सः ।
कूर्पराङ्घ्रिरदनास्यशिरांसि
स्फोटयन्नखिलभृत्यजनस्य ॥ १०९ ॥

केचिदत्र विगताखिलचेष्टा
मूर्छिता धरणिपीठमवापुः ।
कम्पमानवपुषः पुनरन्ये
तस्थुरर्पितमुखाः करपद्मे ॥ ११० ॥

पातितोस्म्यहह कष्टमविज्ञै—
रेभिराः कटिरियं व्यथते मे ।
निस्वनन्निति सुपीवरगात्र—
स्तान् ममर्द च जगाद च भानुम् ॥ १११ ॥

नाश्रयो मम जनाश्च वराका
धर्तुमेव न च मां खलु शक्ताः ।
कौतुकं च महदस्ति ततो मा—
मन्यथोद्धरत पश्यत शिक्षाम् ॥ ११२ ॥

इत्युदीर्णमुपकर्ण्य वलिष्ठा-
नादिदेश हरिसूनरशेषान् ।
आरुरोपयिषुकान् युगपत्ते
प्रोद्युयुर्नृपसुताः सममेव ॥ ११३ ॥

तेपि तद्विधिमवापुरशेषा
उज्जिहीर्षुरथ तं जडगात्रम् ।

पूज्यराज्यतनयैः सह धीरै-
स्स्थितो हरिसुतः स्वयमेव ॥ ११४ ॥

तं प्रपात्य धरणौ धरणीभृत्
स्थैर्यमार्यसहितं गुरुमूर्तिः ।
तस्य वक्षसि निधाय च पादं
वेगतस्तुरगपृष्ठमियाय ॥ ११५ ॥

पश्यतां मुदितचेतसां नृणा-
मग्रतो ललितवाजिनं चिरम् ।
सम्प्रवाह्य वरशिक्षयोर्जितं
स्वं यशोऽतिविशदं प्रकाश्य सः ॥ ११६ ॥

उन्मुखैर्हरिसुतादिभिर्जनै—
र्वीक्षितः पटुमतिस्तिरोऽभवत् ।
भामिकोपवननागवल्लिका-
कान्तमाप्य स जगाद रक्षकान् ॥ ११७ ॥

एतदेव धनमस्य चाशया
दूरदेशमनुयातवानहम् ।
तत्क्षणं मम हयाश्चरन्त्वमी
येन विक्रियमवाप्नुयुर्द्रुतम् ॥ ११८ ॥

वातकी त्वमसि किं पिशाचकी
केनचित्किमुत भो प्रतारितः ।
यत्र द्रष्टुमपि लभ्यते वनं
तत्र चेद्धयगतिं समीहसे ॥ ११९ ॥

ते जगुस्तमिति विष्णुवल्लभा—
नागवल्लिवनमेतदत्र हि ।
चक्रवर्तितनयः प्रसादवान्
क्रीडितुं यदि लभेत नापरः ॥ १२० ॥

तद्वचश्च स निशम्य तान् जगौ
रक्षका भवत निष्ठुराः किमु ।
स्थानमानपुरुपान्तरं न वा
वेत्ति योऽस्य पुरतो वृथा वचः ॥ १२१ ॥

सञ्चरन्तु तृणमात्रभक्षिणो
रक्षका मम हया वनान्तरे ।
वञ्चयामि यदि वः प्रगृह्यतां
मुद्रिकाग्रहणकं ममोत्तमाः ॥ १२२ ॥

तन्निशम्य मुदितान्तराशया-
स्तं गृहीतवरमुद्रिका जगुः ।
एवमस्तु परितोऽत्र कुल्यकं
भक्षयन्तु तृणजातमिच्छया ॥ १२३ ॥

तान् जगाद पुनरित्यसौ हया
यद्यमी व्यथितगात्रकाः क्षुधा ।
पत्रपुष्पफलभक्षणं व्यधु—
र्नो निषेद्धुमुचितास्ततः क्षणम् ॥ १२४ ॥

तन्निशम्य जगदुः परस्परं
ते हसन्त इति किं तुरङ्गमाः ।
नागवल्ल्यदनमत्र कुर्वते
इत्युदीर्य शिथिला गताः पुरीम् ॥ १२५ ॥

तद्वनं सपदि नन्दनोपमं
स्थण्डिलीकृतमनंगवाजिभिः ।
तत्सरांस्यपि महान्ति तत्क्षणा—
च्छोषितानि भृगुवद्बभूवतुः ॥ १२६ ॥

मातृकार्यकरणैकतत्परो
वीक्ष्य शून्यमखिलं वनं ततः ।

हर्षपूर्णमतिरिष्टचेष्टितः
प्राप चारु नगरीवनं क्षणात् ॥ १२७ ॥

दृष्ट्वाऽनेकाः पादपजातीरमणीया
नानापक्षिव्याततशाखाः फलपुष्पैः ।
मृष्टैरिष्टैरुद्धतगन्धैः परिनम्राः
पप्रच्छेदं कस्य वनं स्यादिति विद्याम् ॥१२८॥

विष्णोरिष्टा या वनितानामतिमात्रं
सत्या मातुस्ते रिपुभावं सततं या ।
धत्ते दुष्टा तद्वनमेतन्मदनेष्टं
कामं विद्या प्राह यथेष्टं कुरु देव ॥ १२९ ॥

एवं श्रुत्वा मर्कटमेकं चपलांगं
दीर्घोत्पुच्छं चञ्चलनेत्रं तनुमध्यम् ।
भण्डीरास्यं भीषणनादं सितदंतं
कृत्वा स्थूलं सुस्वरवादी श्वपचोऽभूत् ॥१३०॥

प्राह स्साहो मे वनरक्षाः कपिरेष
वालो वाढं वाञ्छति भोक्तुं फलमेकम् ।
क्रीडा रम्या जीवनहेतुर्मम यस्य
तत्पं यच्छत पक्वं चैकं फलमस्मै ॥ १३१ ॥

उक्तं श्रुत्वा प्रोचुरतस्ते हरिवध्वाः
सत्याख्यायाः सद्वनमेतत्फलपूर्णम् ।
द्रष्टुं स्पृष्टुं दुर्लभमङ्ग स्फुटमेव
प्राप्तुं भोक्तुं कैव कथा च क्रियतेस्य ॥ १३२ ॥

गच्छाश्वस्माद्धो वनदेशात् श्वपच त्वं
दृश्येथाश्चेद्वैष्णवलोकैः पुरुषैस्तैः ।
प्राप्नोस्यन्यैर्वक्तुमशक्यं वत कृच्छ्रं
दोषोऽस्माकं नास्ति तमूचुर्वनपालाः ॥ १३३ ॥

उक्त्वेवं तांस्तं स च वेगात्प्रमुमोच
क्षुद्रा यूयं पश्यत कृत्यं कपिभर्तुः ।
विष्णुः सत्या किं कुरुतेस्मै कुपितापि
मह्यं चेत्याभाष्य जगाम द्रुतमेषः ॥ १३५ ॥

दण्डैर्दोर्भिः खड्गपलाशैर्बहुशस्त्रै
रुद्धोप्याप तान्परिहृत्य क्षणतोऽसौ ।
उद्यानं सच्छाखिमनोज्ञं प्रविवेश
तच्च ध्वस्तं तेन समस्तं प्लवगेन ॥ १३६ ॥

कोपवशादभिपात्य समस्तं
भूरुहवृन्दमसंवृतगात्रः ।
त्रोटितचारुलतानिकरोस्मा—
त्प्राप पुरीं पुरुषोत्तमसूनुः ॥ १३७ ॥

तत्र कनत्कनकाख्यरथं तं
दिव्यमनेकसुमंगलयुक्तम् ।
सन्मुखमेष उरुस्थितधैर्यो
वीक्ष्य विवेद च कर्णपिशाच्याः ॥ १३८ ॥

भानुविवाहसुमंगलकुम्भैः
केतुवितानकशङ्खसमेतैः ।
काहलवंशमृदंगकभेरी-
तोरणदुन्दुभिदर्पणवृन्दैः ॥ १३९ ॥

याति युतोयमतिस्फुटवाचा
शत्रुजनं प्रतिवुद्धय समेतम् ।
उष्ट्रखरेण रथं प्रविधाय
क्षोभयितुं सकलं स हि वेगात् ॥ १४० ॥

धावयतिस्म जनैरुपहास्यः
पातितमङ्गलकुम्भवितानः ।

चूर्णितभानुजनः क्षणतोसौ
क्रीडितवांश्च चिरं प्रतिवीथि ॥ १४१ ॥

दंशमहामशकादिभिरुग्रै—
र्नाशितशेषजनोतिरुरोध ।
मार्गमितस्तत उन्मुखधावन्
स्यन्दनकेन सुतोथ मुरारेः ॥ १४२ ॥

तं प्रविलोक्य जना जगुरेवं
कोयमहो पुरुषो विकृतिस्थः ।
क्रीडति धीरमतिः पुरि विष्णो–
र्धावदुदुष्ट्रखराहितचक्री ॥ १४३ ॥

किन्नर एष खगः सुरनाथः
पन्नगराडुत दैत्यवरो वा ।
जालमिदं सुरपस्य तु माया
स्वप्नमहं किमु वास्म्यथ जाग्रत् ॥ १४४ ॥

इत्यतिविस्मितधीः पुरलोकः
काममवेक्ष्य परस्परमुक्तः ।
हासभृदुद्धतना करताडं
स्वेन विधाय चिरं प्रतुतोष ॥ १४५ ॥

क्रीडितमन्यजनैर्दुरवापं
तत्र विधाय ततः प्रविवेश ।
तन्नगरीपृथुमध्यनिविष्टां
प्राप पवित्रजलामुरुवापीम् ॥ १४६ ॥

तत्र बभाण यदुं निजविद्या
त्वज्जननी प्रतिपक्षयुवत्याः ।
विद्धि मनोभव भानुजनन्या
स्त्रीजनरक्षजलां वरवापीम् ॥ १४७॥

विद्यावाक्यं तन्निशम्यांगजन्मा
हंहोत्यन्तं स्वं परावृत्य देहम् ।
छत्री दण्डी कुण्डिकायोगपट्टः
श्रुत्याम्नायी वेदवित्पिंगलाक्षः ॥ १४८ ॥

ज्ञात्वालम्बि श्वेतवासाः सदर्भः
कोपी सूक्ष्मी शुभ्रयज्ञोपवीती ।
विप्रो वृद्धः कम्पिताशेषगात्रो
भूत्वा रामा याचते ताः स चैवम् ॥ १४९ ॥

पुत्र्यो दत्त स्नातुं मह्यं
वाप्यां नीरं शान्त्यर्थं च ।
कस्याप्येतद्दत्तं येन
भोक्तुं पुर्यां प्राप्नोम्यस्याम् ॥ १५० ॥

श्रुत्वैवं ताः प्रोचुर्विप्रं
विष्णोरिष्टा भार्या सत्या ।
भानोर्माता सौभाग्याब्धि-
स्तस्या वापी भात्येवं या ॥ १५१ ॥

हारिचक्रवाकसुस्तनी
हंसवृन्दचारुगामिनी ।
अंगनेव वल्लभा नृणां
भट्ट दुर्लभा हि पापिनाम् ॥ १५२ ॥

यादवभोजगपाण्डववीरैः
पौरजनैरपि पूजितपादः ।
विष्णुरिहैकतमो वनिताभि-
स्तत्तनुजोपि च मज्जति नान्यः ॥ १५३ ॥

तद्वचः स विनिशम्य जगाद
सूनुरस्मि हरिवल्लभवध्वाः ।

चूर्णितभानुजनः क्षणतोसौ
क्रीडितवांश्च चिरं प्रतिवीथि ॥ १४१ ॥

दंशमहामशकादिभिरुग्रै—
र्नाशितशेषजनोतिरुरोध ।
मार्गमितस्तत उन्मुखश्चावन्
स्यन्दनकेन सुतोथ मुरारेः ॥ १४२ ॥

तं प्रविलोक्य जना जगुरेवं
कोयमहो पुरुषो विकृतिस्थः ।
क्रीडति धीरमतिः पुरि विष्णो-
र्धावदुदुष्ट्रखराहितचक्री ॥ १४३ ॥

किन्नर एष खगः सुरनाथः
पन्नगराडुत दैत्यवरो वा ।
जालमिदं सुरपस्य तु माया
स्वप्नमहं किमु वास्म्यथ जाग्रत् ॥ १४४ ॥

इत्यतिविस्मितधीः पुरलोकः
काममवेक्ष्य परस्परमुक्तः ।
हासभृदुद्धतना करताडं
स्वेन विधाय चिरं प्रतुतोष ॥ १४५ ॥

क्रीडितमन्यजनैर्दुरवापं
तत्र विधाय ततः प्रविवेश ।
तन्नगरीपृथुमध्यनिविष्टां
प्राप पवित्रजलामुरुवापीम् ॥ १४६ ॥

तत्र बभाण यदुं निजविद्या
त्वज्जननी प्रतिपक्षयुवत्याः ।
विद्धि मनोभव भानुजनन्या
स्त्रीजनरक्षजलां वरवापीम् ॥ १४७॥

विद्यावाक्यं तन्निशम्यांगजन्मा
हृष्टोत्यन्तं स्वं परावृत्य देहम् ।
छत्री दण्डी कुण्डिकायोगपट्टः
श्रुत्याम्नायी वेदवित्पिंगलाक्षः ॥ १४८ ॥

ज्ञात्वालम्बि श्वेतवासाः सदर्भः
कोपी सूक्ष्मी शुभ्रयज्ञोपवीती ।
विप्रो वृद्धः कम्पिताशेषगात्रो
भूत्वा रामा याचते ताः स चैवम् ॥ १४९ ॥

पुत्र्यो दत्त स्नातुं मह्यं
वाप्यां नीरं शान्त्यर्थं च ।
कस्याप्येतद्दत्तं येन
भोक्तुं पुर्यां प्राप्नोम्यस्याम् ॥ १५० ॥

श्रुत्वैवं ताः प्रोचुर्विप्रं
विष्णोरिष्टा भार्या सत्या ।
भानोर्माता सौभाग्याब्धि-
स्तस्या वापी भात्येवं या ॥ १५१ ॥

हारिचक्रवाकसुस्तनी
हंसवृन्दचारुगामिनी ।
अंगनेव वल्लभा नृणां
भर्तृ दुर्लभा हि पापिनाम् ॥ १५२ ॥

यादवभोजगपाण्डववीरैः
पौरजनैरपि पूजितपादः ।
विष्णुरिहैकतमो वनिताभि-
स्तत्तनुजोपि च मज्जति नान्यः ॥ १५३ ॥

तद्वचः स विनिशम्य जगाद
सूनुरसि हारिवल्लभवध्वाः ।

वेदविद्द्विजवरप्रथितात्मा
भ्रान्तिरस्ति यदि वः शृणुतोक्तम् ॥ १५४ ॥

भूपतिर्गजपुरे कुरुवंशे
यः सुयोधन इति प्रथितोऽस्ति ।
प्राहिणोन्निजसुतां स च भानोः
सा हृतार्द्धपथ एव च भिल्लैः ॥ १५५ ॥

तेपि तां निजपतेरुपनिन्युः
सोपि तां समवलोक्य निदध्यौ ।
नोचिता मम वधूरियमार्या
क्षत्रियस्य कुलजस्य च योग्या ॥ १५६ ॥

इत्यसौ किल निगद्य तदानीं
यावदास्त पथि तत्र स विप्रः ।
प्राप्तवानहमभार्यतयार्त—
स्तां दिदेश च स मे दृढभक्त्या ॥ १५७ ॥

तत्समानयुवतिर्भुवि काचि—
न्मत्समो न च वरो मनुजेषु ।
तेन विष्णुतनयः किमु वत्से
दीयते न सलिलं न च मंकुम् ॥ १५८ ॥

तद्वचश्च विनिशम्य हसित्वा
ता जगुर्घटत एव हि सर्वम् ।
त्वं क्व विप्र कुरुराजसुता क्व
दूरतस्तु हरणं शवरेण ॥ १५९ ॥

सोपहासमिति विप्रवरोऽसौ
वारितोपि स तथा युवतीभिः ।
द्राक् प्रियोक्तिरविशद्गुरुवापीं
कं गृहाण च कमण्डलुपूरम् ॥ १६० ॥

पुरीहट्टशोभा हतात्यन्तमेवं
व्रजंतं च तं तत्र तास्तूर्णमीयुः ॥ १६७ ॥

आपणेषु विविधान्मणिभेदान
रत्नभूपणसुभाजनलोहान् ।
शस्त्रवस्त्रघृतभाण्डसुगन्धि-
द्रव्यजातमिदमप्रतिमं यत् ॥ १६८ ॥

हस्त्यादिवाहनविशेषगवादिजातं
तेषां महोपकरणानि बहूनि तत्र ।
पश्यंतमुद्वहनमंगुलिकाः स्पृशन्त-
मूचुर्विमुञ्च जलमग्रभवास्मदीयम् ॥ १६९ ॥

श्रुत्वा द्विजः परुषगालिवचांसि तासां
प्रस्फोट्य तत्र जलपात्रमुरुप्रवाहम् ।
नीरं मुमोच स तथा जनता विभीता
ब्रूते यथाम्बुधिरयं चलितः स्थितेः किम् ॥ १७० ॥

मुक्ताप्रवालमणिकांचनरत्नवाहः
क्षुभ्यज्जनोर्मिमकराद्यटनाभिरामः ।
लोकं चकार सभयं परितो विसर्पी
कल्पान्तकालजलधेरिव वारिसंघः ॥ १७१ ॥

एवं विधाय जरसा चलितांगयष्टि-
र्विप्रो जगाम कुसुमोत्करसंप्रपूर्णम् ।
स्त्रक्कारसद्मनिकरं पठनोपशोभि-
वक्त्रो वदन्निति वचो विदिताखिलोक्तिः॥१७२॥

मालाकृतो हरिसुतोत्सवगेहमेत्य
दत्वाशिषं नववधूहरिवल्लभाभ्याम् ।
तस्मात्प्रदत्त कुसुमानि वराणि मह्यं
येनाद्य भोजनमहं सरसं लभेयम् ॥ १७३ ॥

ऊचुर्द्विजोत्तम सुकेतुसुतासुतार्थं
पुष्पाणि यानि विविधानि सुरक्षितानि ।
दातुं न तत्र दलमेकमपि क्षमा भो
विप्रागतो व्रज ततस्त्वमतः सुतूर्णम् ॥ १७४ ॥

तद्वाक्यतः कुपितमानसवृत्तिरेवं
चक्रे द्विजः कुसुमवृन्दमशेषमेव ।
मन्दारकुन्दबकुलोत्पलजातिनाग-
पुन्नागपूर्वकमथार्कमयं क्षणेन ॥ १७५ ॥

गन्धान् गन्धापणेषु प्रतिविपणि तथाधान्यमन्येषु चान्यान्
विप्रः क्रीडानुषङ्गात्सकलमपि यदुत्कृष्टवस्तु प्रयत्नात् ।
तत्तन्नीत्वान्यथात्वं गजपतिगमनो ब्रह्मछद्मा मनोभूः
कीर्णं लोकैरसंख्यैस्त्रिजगदिव परं राजमार्गं ददर्श ॥ १७६ ॥

क्षीवकुञ्जरकपोलमदाम्भः
कर्दमातिविषमं तमवेक्ष्य ।
तुष्टिमेत्य कृतमङ्गलगीतं
राजवेश्म स ददर्श यदेकम् ॥ १७७ ॥

पृच्छतिस्म स तदा निजविद्यां
कस्य सौधमिति सा च जगौ तम् ।
देव विद्धि जनकस्य पितुस्ते
मेषयुद्धकृतकौतुककस्य ॥ १७८ ॥

कनत्कनकतोरणं ध्वजपताकिकासन्मणि-
स्फुरद्विविधदर्पणप्रचुरकुम्भभृङ्गारकैः ।
मृगेन्द्रशरभाद्भुतप्रतिनिधिप्रभाभासुरं
विवेश कृतमेषकः स किल तद्गृहं मानवः ॥ १७९ ॥

तत्रानकं निखिलराजसुतैः परीतं
भास्वत्सुकाञ्चननिभं सकलेन्दुवक्त्रम् ।

तस्मात्तदेव परिपूर्णममोघमग्र्यं
महां ददातु सुतमंगलवृद्धिहेतोः ॥ १९३ ॥

तुष्टा बभाण हरिवल्लभिका द्विजं तं
गत्वा महानसमशेषरसं महान्नम् ।
त्वं भुंक्ष्व भोजयति मे परिवारिलोको
विप्रादरेण महता परमं विवेकी ॥ १९४ ॥

भुञ्जे न वाहमधमैः शठविप्रवर्गैः
पाखण्डिभिः सुतकलत्रवृतैः कुशीलैः ।
सन्ध्याक्रियाचरणवेदविधिं विहाय
नाम्नैव विप्रपरिषत्सु निवेष्टुकामैः ॥ १९५ ॥

यस्मादिमे त्रिगुणताधिकृता विनिन्द्या
वेदांगशास्त्रविदहं तु यथोक्तविप्रः ।
तस्मादतः पतितविप्रगणात्पृथङ्मे
देयं वरासनमधोक्षजपत्नि पूर्वम् ॥ १९६ ॥

तृप्तं गवादि मयि तृप्तिमिते समस्तं
पात्राय देयमखिलार्थविदे च किं तत् ।
तच्चाहमेव कुरु तेन मयि प्रयत्नं
कृत्यं किमेभिरधमैरपि कोटिसंख्यैः ॥ १९७ ॥

विप्रस्य वाक्यमवधार्य समादिदेशे
राज्ञी निजांश्चरणधावनवारिदाने ।
तत्राग्रतः सकलविप्रगणस्य पादौ
प्रक्षालनार्थमभियोजितवान्वटुः सः ॥ १९८ ॥

प्रक्षाल्य पादयुगलं प्रवराग्रपीठे
मान्ये स्थितः पटुवचाः परिकर्मणिस्थे ।
अन्ये पुनः समवलोक्य वटुं सकोपाः
प्रोचुर्द्विजाः समुपहस्य मनाक्सगर्वाः ॥ १९९ ॥

अज्ञातजातिकुलगोत्रसुशाखकोऽयं
क्षुद्रोऽग्रपीठमधिरुह्य निविष्टवान् द्राक् ।
शुष्कोग्रमूर्ख कलहेन किमत्र साध्यं
साध्वासहे क्वचिदिति पृथगेव गत्वा ॥ २०० ॥

एवं प्रभाष्य कुपिताश्च सलज्जचित्ता—
स्तस्थुस्ततः पृथुनि भोज्यगृहे यथा स्वम् ।
तत्राप्यजाग्रतनयोऽग्रगतो बभूव
नारायणाग्रवनितासमुदीक्ष्यमूर्तिः ॥ २०१ ॥

दृष्ट्वाथ तं जगुरहो कलहप्रियोयं
प्रायेण जातिरहितो द्विजवेषधारी ।
सर्वान्द्विजान् सकलवेदविदः प्रधाना—
न्न्यक्कारको निहत दुष्टममुं न दोषः ॥ २०२ ॥

इत्यादिभाषणपरानवलोक्य विप्रान्
ब्रूते वटुर्विकसिताननचन्द्रमांस्तान् ।
भो भो द्विजाः सकलवेदविदःषडङ्ग—
मंत्रार्थकोविदतराः किल यूयमेते ॥ २०३ ॥

ब्रह्मत्वे सति जगति प्रमाणसिद्धे
वेदे वा पुरुषवचःप्रयोगमुक्ते ।
युष्माकं तदतिपूजनं तदास्या—
त्किन्त्वेतद्द्वयमपि दुर्घटं सुयुक्त्या ॥ २०४ ॥

नो जातिर्न हि वपुराकृतिर्न शिष्या
ब्राह्मण्यं क्वचिदपिलक्षणं प्रसिद्धम् ।
सर्वेषां व्यभिचरणादकर्तृकस्य
वेदस्यानवगमनान्न सोपि युक्तः ॥ २०५ ॥

यत्राजाहयनरराजगोश्वमाता—
पित्राद्याः शुभमुपदिश्य मार्यमाणाः ।

श्रूयन्ते गमनमगम्यमप्यदोषं
पीत्वापि क्षितिदिविजाः सुरां न दुष्टाः ॥ २०६ ॥

मांसाशो मधुपरिभोजनं न दुष्टं
यत्रान्या जगति विरुद्धरूपभूताः ।
विख्याता विपुलतराः कथा द्विजार्यां
वेदः स्यात्स इह कथं प्रमाणभूतः ॥ २०७ ॥

इत्युक्ते सकलुषमनसो द्विजेन्द्राः
प्रोत्तस्थुश्चटुलवहुलध्वनिप्रपूर्णाः ।
हन्तुं तं प्रचलितकूर्चबाहुगात्रा
गृह्णीत द्रुतमिति वादिनः समस्ताः ॥ २०८ ॥

ततोन्योन्यगात्राण्यमी ताडयन्तः
शिरोभिः शिरांसि स्रवत्स्वेदवन्ति ।
स्वदोर्भिश्च दोषो बृहन्मुष्टिघातै—
श्चिरं युद्धवन्तो महाक्रोधभारम् ॥ २०९ ॥

पतन्तस्खलंतो लुठन्तो व्रजन्तो
वदन्तः स्फुरन्तः शपन्तोतिदुःखाः ।
नुदन्तो रुदन्तः क्षरन्सान्द्ररक्ता
बभूवुर्विलक्षा विषण्णा द्विजेन्द्राः ॥ २१० ॥

इति प्रेक्ष्य विप्रान् हसन्ती बभाषे
निजान् सत्यभामा वटुं यत्नतोमुम् ।
महागौरवेण द्रुतं भोजयध्वं
ददध्वं यथेष्टं वरान्नं मनोज्ञम् ॥ २११ ॥

तथा तैः कृतोसौ सुवर्णादिपात्रे—
ष्वनेकेषु दत्तं क्रमं स प्रमुच्य ।
प्रवृत्तः प्रभोक्तुं महद्भिः सुपिण्डै—
र्गजेन्द्रो यथायं बुभुक्षार्दितः सन् ॥ २१२ ॥

दद्ध्वं दद्ध्वं वदन्नातुरात्मा
पतंतं स्वपात्रे क्षिपन् क्वापि शीघ्रम् ।
क्षिपन्ति स्म दृष्टा परं ते जनौघा
वराहारजातं महाकौतुकेन ॥ २१३ ॥

ततो यादवानां प्रधानाः सुयोषा
विवाहे समेता विशालायताक्ष्यः ।
रणन्नूपुरादिप्रधानानुभूषाः
प्रधान्या गतास्तं निरीक्ष्यावदंश्च ॥ २१४ ॥

महामण्डकौघानपूपानसंख्या—
नुदश्विद्दधिक्षीरतैलोदन्नानि ।
अदन्नेष विप्रः शिशुर्नैव तृप्तिं
व्रजत्यल्पकायो निरीक्ष्यध्वमेनम् ॥ २१५ ॥

महच्चित्रमेतच्छिशुस्त्रप्यते नो
गजाश्वोष्ट्रभृत्यक्षितीशार्थसिद्धम् ।
समस्तं प्रभक्ष्याप्य सन्तुष्टचित्तः
कथं जीवतीत्थं स्वगेहे द्विजोयम् ॥ २१६ ॥

अन्योन्यांशनितम्ववक्रजघनोत्तुङ्गस्तनोत्पीडनं
कुर्वत्यः सुदृशोतिकौतुकवशाद्वीक्ष्यां बभूवुर्द्विजम् ।
भुक्त्वा सोपि समस्तमन्नमवदच्छीघ्रं दद्ध्वं जना
दोषः किं भवतामियं हि कृपणा सत्या दरिद्राथवा ॥ २१७॥

भानुस्ते तनुजो हरिः पतिरहो तातोपि खेटाधिपः
स्वामिन्यस्यखिलाङ्गनासु सुभगा सत्ये तथापीदृशम् ।
लोभं धारयसीहसे च मुखतो भोज्यं करोमीत्यलं
ही कष्टं तव चेष्टितं प्रतिगृहाणान्नं स्वकीयं खले ॥ २१८ ॥

इत्युक्त्वा क्षणतोन्नपानमखिलं वान्त्वा प्रपूर्याङ्गणं
स्तम्भान्नष्टमनीश्वरां द्विजवरान्सत्याञ्च मग्नां व्यधात् ।

कृत्वा विस्मितमानसं जनमसावन्तर्द्धिमाप क्षणा-
न्मातुर्गेहमवाप्नुमुत्सुकमना द्रष्टुं चिरान्मातरम् ॥ २१९ ॥

लक्ष्मीपतेर्वल्लभिकातनूजो
भूत्वा क्षणात्क्षुल्लकवेषधारी ।
क्षीणो विरूपोऽस्तसुगन्धभावो
दण्डी करंकी समितिप्रयुक्तः ॥ २२० ॥

उद्दन्तुरः शुष्कमुखोल्पनेत्रः
खल्वाटकोऽचूटकरूक्षरूपः ।
उद्घाटितास्योतिसिरालगात्रो
दीर्घाङ्घ्रिहस्तः कुटिलांगुलिश्च ॥ २२१ ॥

निर्मांसकस्फिक्परिशुष्कजंघो
भग्नोरुपृष्ठः कुटिलोदरोराः ।
विराजमानं मणिभिः समन्ता-
त्प्रापद्गृहं श्रीनिलयं स्वमातुः ॥ २२२ ॥

भेरीमृदंगानकवंशताल—
वीणोरुशंखस्वनपूरिताशम् ।
श्रीखण्डकालागुरुधूपधूम-
प्रधूपिताशेषदिगन्तरालम् ॥ २२३ ॥

विलासिनीरूपसमुच्चयेन
यन्निर्ज्जिगायामरयोषितोपि ।
व्यापारशक्ताखिललोककान्तं
हृष्टो व्रती वेश्म विवेश तस्याः ॥ २२४ ॥

नीलाञ्जपुञ्जप्रभदेहकान्तिं
पूर्णेन्दुसम्पूर्णमुखीं कृशांगीम् ।
वन्धूककुन्दाधरपाणिपाद—
दंतां कनत्काञ्चनरत्नभूषाम् ॥ २२५ ॥

जगत्त्रयस्त्रीसमुदायकान्ति
शरीरमादाय भुवं गतां वा ।
शची नु कान्ता नु महेश्वरस्य
विकल्पमेवं दधतीं जनानाम् ॥ २२६ ॥

तस्मिञ्जिनेन्द्रायतनाग्रदेश-
स्थितां महामण्डपमध्यभागे ।
भद्रासने मंगलयुक्तयोषा-
सेव्यामकस्माज्जननीं ददर्श ॥ २२७ ॥

दृष्ट्वा स चित्तेन नतो बभूव
को वा न पूज्ये नमतिं विधत्ते ।
आयान्तमालोक्य च सापि जैनं
धर्मानुरागात्सहसात्युदस्थात् ॥ २२८ ॥

इच्छाम्यहं क्षुल्लक ते जिनोक्त—
रत्नत्रयं शुद्धमिति प्रभाष्य ।
दत्त्वासनं रत्नमरीचिचक्र-
प्रकाशिताशेषदिगन्तरालम् ॥ २२९ ॥

उत्तुंगपीनस्तनभारनम्रा
सा क्षुल्लकेनानुमताथ राज्ञी ।
तुष्टा परं सम्भ्रममादधाना
निजासने सा निषसाद तन्वी ॥ २३० ॥

अन्योन्यरत्नत्रयशुद्धिमेतौ
पृष्ट्वा प्रियालापपटुर्यथोक्तम् ।
श्रीक्षुल्लकश्चक्रपतेश्च भार्या
स्थितौ क्षणं क्षीणकुदृष्टिमोहौ ॥ २३१ ॥

अथाह तां क्षुल्लकवेषधारी
लक्ष्मीशभार्ये बहुतीर्थदेशान् ।

दृष्ट्वा प्रबन्धादरतोहमाप्तः
श्रुत्वा प्रसिद्धिं तव देवि धर्मे ॥ २३२ ॥

तेनाशु मे पेयमनेकभूरि--
द्रव्यैः सदुष्णं प्रविधाय शीघ्रम् ।
प्रदापयामोघममोघवाक्ये
स्वस्थो यतोहं प्रभवामि मातः ॥ २३३ ॥

उक्त्वेति संस्तम्भितपावकोसौ
बुभुक्षितोस्म्याश्विति वक्ति भूयः ।
स व्याकुलत्वादतिवेगयुक्ता
भूयो जनान् प्रेरयति स्म साध्वी ॥ २३४ ॥

शक्नोमि नो स्थातुमहं मुरारेः
कान्ते द्रुतं देहि गतांश्च मेऽसून् ।
विद्धीति चोवाच पुनः पुनश्च
मायाप्रधानो हि मृपोद्यमोहम् ॥ २३५ ॥

सन्मोदकान्विष्णुनिमित्तसिद्धान्
दत्तान् स्वमात्रा दशभूरिसङ्ख्यान् ।
एकैकमेवात्र सुदुर्जरत्वा—
द्यान्विष्णुरप्यत्ति महादरेण ॥ २३६ ॥

पूत्कारकोऽभूत्पुनरप्यनङ्गो
बुभुक्षितोस्मीति भणन्सरोपः ।
धर्मानुरागं स परीक्ष्य मातुः
स्वस्थः क्षणं यावदसौ किलास ॥ २३७ ॥

प्रभाषितास्तावदशेषभावाः
क्षेमंधरस्वामिजिनेन पूर्वम् ।
संसूचका ये सुतसङ्गमस्य
प्रादुर्भवन्सद्मनि भीष्मजायाः ॥ २३८ ॥

मूकी वचो शोकतरोश्च पुष्पं
वापीभरः कोकिलकेकिनादः ।
उद्यानशोभापि वसन्तकालः
सर्वे मनःप्रीतिकरा जनन्याः ॥ २३९ ॥

दृष्ट्वाथ तान् भीष्मसुतातितोषा—
द्दध्यौ ममेष्टांगजसंगमस्य ।
ये सूचका सन्निहितास्त एते
दृश्यो न चासौ किमु क्षुल्लकः स्यात् ॥ २४० ॥

रोमश्चते मे तनुरप्यजस्रं
क्षीरश्रवोयं कुचकुम्भभारः ।
दिशोपि निर्मुक्तरजःप्रताना—
श्चित्तप्रसादोपि महान् वभूव ॥ २४१ ॥

स्यादेष चेन्मत्तनयोथ निन्द्यो
वीभत्समूर्तिर्विधिनोपनीतः ।
सत्यामुखं मत्सरदोषदुष्टं
कथं नु वीक्ष्ये गलितावलेपा ॥ २४२ ॥

प्रायेण विष्णोर्मयि सम्प्रभूतो
वालोतिरूपो वलवान्सुविद्यः ।
सद्दृष्टिरुत्तुंगगुणो यशस्वी
स्यादेव शूरः प्रथितात्मकीर्तिः ॥ २४३ ॥

पुण्यात्परं रूपसरूपतादि
स्यात्क्षेत्रमात्रोऽप्रकृतं हि जन्तोः ।
क्षेत्राश्रयं रूपमिहाङ्गिनां चेत्
किं भोगभूमौ हरिणोष्ट्रसिंहाः ॥ २४४ ॥

विद्याधरेशाग्रवधूगृहेसौ
प्रवर्धमानः कथितोखिलानाम् ।

विद्याधिपानां प्रभुरात्तविद्यो
मायाप्रधानो भवतीति धीमान् ॥ २४५ ॥

लब्धो नु यत्षोडशलम्भकः सन्
दिव्याभिरूपो रिपुवर्गजेता ।
कृत्वा विरूपाकृतिमागतः किं
परीक्षणार्थं मम चित्तशुद्धेः ॥ २४६ ॥

चिरं विचिन्त्यैवमुवाच राज्ञी
तं क्षुल्लकं शीलनिधिं विचित्रम् ।
स्वमातृवन्ध्वादिकथाभिरुच्चैः
कर्णद्वयं मे सुखिन कुरुष्व ॥ २४७ ॥

सोऽप्याह तां श्रावकसत्तमे किं
साधुव्रतस्थाः शमिताखिलेच्छाः ।
क्वचित्कदाचिच्च विमुक्तरागाः
स्वजातिनामादिकथां प्रकुर्युः ॥ २४८ ॥

युक्तो न तेऽप्यम्ब कुलोरुजाति-
प्रश्नो मुनीनां पटुभावनायाः ।
जिनेन्द्रमार्गे कुलजातिहीना
दृष्टा त्वया किं क्वचिदुन्नतोक्तौ ॥ २४९ ॥

यद्युन्नता किं कुरुषे ममत्वं
नोचेद्भवेयं त्वपकारजातम् ।
मौढ्याद्वृथा पृच्छसि रुक्मिणि त्वं
त्वमेव माता हरिरेव तातः ॥ २५० ॥

तौ हृष्टचित्ताविति यावदास्ता-
मत्रांतरे पूर्वकृतां प्रतिज्ञाम् ।
स्मृत्वा सुकेतोस्तनयापि ताव—
दजीगमन्नापितमात्तगर्वा ॥ २५१ ॥

आयांतमालोक्य विलासिनीभि—
स्तं बाष्पपूराकुलदृष्टिमेनाम् ।
पप्रच्छ देशव्रतिकः शुचस्ते
किं कारणं मे कथयाम्ब शीघ्रम् ॥ २५२॥

सावोचदुत्तुंगतपोधनानां
युष्मद्विधानां हि पुरो वचो यत् ।
स्याद्दुःखविच्छेदकरं यतोन्तः
शृण्वेकचित्तो व्रतपूतदेहः ॥ २५३ ॥

सत्यास्ति पत्युः प्रथमांगना मे
विद्याधरी सर्वकलानिवासा ।
अहं तु भीष्मस्य सुता स्वपत्युः
प्रसादचित्तापि भवामि किञ्चित् ॥ २५४ ॥

प्रागावयोरेवमभूच्च संस्था
सत्साक्षिका मत्सरचित्तवृत्त्योः ।
यस्याः सुतः स्यात्प्रथमो विवाहे
तस्यानपत्यालकवल्लरीभिः ॥ २५५ ॥

पादार्च्चनं कार्यमिति क्रमेण
पुत्रोऽभवन्मे शुभलक्ष्मदेहः ।
तस्याश्च भानुर्वनजायताक्ष्या
द्वावप्यशेषप्रियजन्मपुण्यौ ॥ २५६ ॥

तत्रैव केनापि हृतो दिने मे
पुत्रो भृशं निष्ठुरचेतसाशु ।
वृद्धिं गतो भानुरपि क्रमेण
विवाहयोग्योपि बभूव पुण्यात् ॥ २५७ ॥

सुयोधनस्योदधिनामकन्यां
वोढुं स वाञ्छत्यनुरागपूर्वम् ।

किलातितोपादलकान् ददौ से-<br>
त्येवं महानन्दधियः प्रयाताः ॥ २७१ ॥

त्वद्वाक्यतो ज्ञातमिदं हि वृत्तं<br>
पूर्वं न वा देवि समूचुरेताः ।<br>
श्रुत्वेति सत्यापि रुरोष पत्ये<br>
भृत्यापराधे प्रभवो हि दुष्टाः ॥ २७२ ॥

कृत्वा समक्षं नृपसंहतेः प्राक्<br>
संस्थां परां पत्युरवाप्य चित्तम् ।<br>
रुक्मिण्यहो स्वालकवल्लरीमें<br>
नो दातुमिच्छत्यतिवल्लभत्वात् ॥ २७३ ॥

दातुं न वाञ्छा यदि मे कचानां<br>
किं मे जनस्यातिविडम्बनां सा ।<br>
केशाङ्गुलिच्छेदपुरःसरां द्राक्<br>
करोति दुष्टा प्रभुमानमत्ता ॥ २७४ ॥

दोषोथवायं खलु किं सपत्न्याः<br>
करोति बाधां शठमाधवो मे ।<br>
रुष्टा विचिन्त्येत्यभिधातुमेवं<br>
स्वाः प्राहिणोद्विष्णुसमीपमेषा ॥ २७५ ॥

गत्वा च वृद्धाः प्रणिपत्य तस्मै<br>
प्रोचुर्यथावृत्तमनेकयुक्त्या ।<br>
तत्रान्तरे प्राह हली विमृष्यं<br>
जनैरिति न्यायविदां तु रोषः ॥ २७६ ॥

अत्रान्तरे मातृमनोभुवोर्या<br>
कथा प्रवक्ष्ये परमाद्भुतां ताम् ।<br>
सत्याङ्गनापितयोश्च वृत्तं<br>
दृष्ट्वा जनन्याह सुतं प्रहृष्टा ॥ २७७ ॥

यो मेघकूटे शितिसम्बरस्य
पुरे गृहे काञ्चनमालिकायाः ।
वृद्धिंगतः षोडशलम्भभागी
प्राप्तिश्च यस्याह मुनिः सुमूर्तैः ॥ २७८ ॥

स षोडशेब्दे शुभचिह्नकानि
प्रोक्तानि यस्यागमने महान्ति ।
येनाखिलाः खेचरलोकपाला
वशीकृता शैशव एव पुण्यात् ॥ २७९ ॥

यस्मै हिता देवखगेशलोका
यं नारदोगादिह चानिनीषुः ।
स त्वं न चान्यो वद पुत्र सत्यं
श्रेयो न नर्मात्र चिरं हि कालम् ॥ २८० ॥

इत्येव मुक्तो गदतिस्म भिक्षुः
कृताञ्जलिः खेचरलोकवासात् ।
प्राप्तोमुनाहं सह नारदेन
सत्यं भवाम्यम्ब सुतस्तवाहम् ॥ २८१ ॥

सन्तप्तकार्तस्वरगात्रयष्टि-
र्व्याकोशलीलाम्बुजपत्रनेत्रः ।
रूपं परावर्त्य स तत्क्षणेन
ननाम पादद्वितयं जनन्याः ॥ २८२ ॥

नेत्रामृतं सर्वविलासिनीनां
यस्योपमानं वपुरद्वितीयम् ।
विलासिनां चारुतया बभूव
का वर्णना तस्य परा विधेया ॥ २८३ ॥

तद्रूपवीक्ष्यानुपलब्धतृप्तिः
पुनः पुनस्तत्तनुमामृशन्ती ।

तं प्रक्षरच्चारुपयोधरा सा
व्यालिंग्य विज्ञातसुता चुचुम्ब ॥ २८४ ॥

एवंविधस्यातिमनोहरस्य
बाल्यं तव प्रेक्षितमीक्षणाभ्याम् ।
ययाङ्क सत्काञ्चनमालयासौ
धन्येति तं सा निजगाद माता ॥ २८५ ॥

धृत्वोदरे त्वां नव पुत्र मासान्
क्लेशात्प्रसूतेति विनष्टपुण्या ।
त्वद्बाल्यमीक्षे न हि चारुलीलं
भाग्यानुरूपा भवितव्यता यत् ॥ २८६ ॥

उक्तं निशम्येति बभाण कामो
बाल्यं च वृत्तं मम देवि सर्वम् ।
किं दुर्लभं द्रष्टुममोघवाक्ये
वाञ्छास्ति वीक्षस्व करोमि बाल्यम् ॥ २८७ ॥

उक्त्वेत्यभूत्तत्क्षणजातमात्रो
बालो वरांग्ये विकजाम्बुजास्यः ।
उत्तानशायी चलपाणिपादः
सुलक्षणैश्चार्चितमुग्धगात्रः ॥ २८८ ॥

लीलोपसर्पी प्रहसी स्वमातुः
स्तनंधयोनेकविलासदक्षः ।
तिष्ठन् स्वयं प्रोत्थितिरीपदीप—
त्प्रसर्पको जानुगतिः क्रमेण ॥ २८९ ॥

उत्थाय भूयः पतनं स्थिरात्मा
मातुः करालम्बगतिः प्रधावन् ।
नाना मणिद्योतितकुट्टिमेषु
भ्रमन्वदत्किंचिदनक्षरं सः ॥२९० ॥

तेनापि वृत्ते कथिते सुगोपात्
प्राप द्विजं तं स्वयमेव रामः ॥ २९७ ॥

दृष्ट्वा स्थितं द्वारि निरुद्धमार्गं
रुष्टो बभाणेति स तं द्विजेन्द्रम् ।
चिरायसे किं द्विज मुञ्च मार्गं
ममास्ति किञ्चिन्महदत्र कार्यम् ॥ २९८ ॥

सत्यागृहे पुत्रविवाहभोज्ये
भुक्त्वा यथेष्टं सुहितोऽतिमात्रम् ।
अप्येकमस्मात्र पदं प्रयातुं
सहो व्रज त्वं स्वपिमीति तात ॥ २९९ ॥

निशाम्य तं वाक्यमथास्य राजा
निशम्य वक्तिस्म कुतूहलेन ।
भुक्त्वेति किं साध्यमहोथवाऽस्ति
लौल्यं द्विजानां प्रकृतिस्थमेव ॥ ३०० ॥

भवत्वमीभिर्बहुभाषितैर्वा
ममास्ति किञ्चित्करणीयमत्र ।
उत्तिष्ठ दुष्ट द्विज मुञ्च मार्गं
तवोपरिष्टाच्च कथं व्रजामः ॥ ३०१ ॥

उक्तेऽगदीत्तं द्विजवेषधारी
भो निष्ठुरस्त्वं बलदेव विप्रम् ।
तिरस्करोष्याः कथमृद्धिमत्तः
क्षमो न दातुं मम किं रुषा ते ॥ ३०२ ॥

श्रुत्वोदितं तस्य बलोऽभिमानी
पादौ गृहीत्वास्य चकर्ष रोषात् ।
दूरं पुराद्बाह्यमुदग्रशक्तिः
कायस्तथाप्यस्य चचाल नाल्पम् ॥ ३०३ ॥

विस्मित्य तं निश्चलकाययष्टिं
दृष्ट्वा पुरा दूरगताग्रपादम् ।
सङ्कर्षणो द्राक्परिमुच्य पादौ
युयुत्सुरायादवबुध्य मायाम् ॥ ३०४ ॥

आयान्तमालोक्य बभाण कामः
कोयं रुषा याति नरोऽवलक्षः ।
पृष्टेति मातापि बभाण तोषा—
दयं पितृव्यस्तव पुत्र शीरी ॥ ३०५ ॥

श्रीमान्महाविक्रमसूदितारिः
प्राणप्रियः पृष्ठतनः[1] पितुस्ते ।
प्रौढैर्मृगेन्द्रैः सह युद्धरङ्गे
विधाय लीलां च रतिं प्रयाति ॥ ३०६ ॥

यावत्स विप्रेण समं युयुत्सु—
रायाति नो राजकुलप्रतोलीम् ।
श्रुत्वेति मातुर्वचनं प्रहृष्य
रूपं परावृत्य बभूव सिंहः ॥ ३०७ ॥

चन्द्रप्रभं बालमृगाङ्कदंष्ट्रं
व्यालोलसत्कुङ्कुमकेशरालिम् ।
दीर्घाग्रमूर्द्धस्थितपुच्छशोभं
संजम्भ्य दिक्चक्रनिविष्टदृष्टिम् ॥ ३०८ ॥

दृष्ट्वा मृगेन्द्रं तमसावकस्मा—
त्पुरः स्थितं भीषणसिंहनादम् ।
शीरी स्ववामाग्रकरप्रयुक्त—
दिव्योत्तरीयं सहसा डुढौके ॥ ३०९ ॥

---

1 ज्येष्ठः ।

अन्योन्यघातप्रतिघातदक्षौ
सन्तर्जनैस्ताडनवञ्चनैश्च ।
परस्परोल्लङ्घनचालनाभि-
श्चिक्रीडितुस्तौ चिरमुग्रकोपौ ॥ ३१० ॥

चपेटया स्फाल्य वलं क्षणेन
कृत्वा नृपास्थानभुवं प्रसन्नाम् ।
हसन्स किञ्चित्तनयो मुरारेः
स्थितः प्रमादी पुरतः स्वमातुः ॥ ३११ ॥

अन्त्रातरे विस्मितमानसा सा
पुत्रं महाविक्रमरूपकान्तम् ।
पप्रच्छ वार्तां मुनिनारदस्य
क्वासौ गतोऽकारणवान्धवो मे ॥ ३१२ ॥

उक्तेऽभणीदम्ब मयैव सार्द्धं
विद्याधराद्रेः पुरमेघकूटात् ।
समागतस्तिष्ठति खे पुरोऽस्या
वहिर्मृगाक्ष्या तव देवि वध्वा ॥ ३१३ ॥

प्राप्ता स्नुषा पुत्र कुतस्त्वयेति
पृष्टो वभाणेति मनोभुवोसौ ।
दुर्योधनेनोदधिनामकन्या
या प्रेषिता भानुविवाहनार्थम् ॥ ३१४ ॥

श्रुत्वा स्वपुत्रेष्टवधूपलब्धिं
तिरस्कृतिं चापि सुकेतुनप्तुः ।
आहस्म पुत्रं मुनिनारदं द्राक्
पुत्रेक्षितुं मे मतिरुत्सुकेति ॥ ३१५ ॥

वभाण कामोम्व कुलप्रसूतो
यः प्राप कालेन चिरेण मानी ।

आख्यापितस्वात्मपराक्रमादिः
सूनुस्तवास्मीति कथ प्रवक्ति ॥ ३१६ ॥

तस्मात्प्रयुध्यात्मपराक्रमादि-
प्रकाशनोत्कृष्टवचोभिरम्ब ।
पित्रे स्वबन्धुक्षितिभृज्जनाय
वक्तुं स्वमेवं ननु साम्प्रतं नः ॥ ३१७ ॥

प्राहस्म माता न हि पुत्र शक्या
जेतुं त्वया यादवभोजवीराः ।
सोवाच देवं प्रविहाय नेमिं
त्वं द्रक्ष्यसे किं बहुभाषितेन ॥ ३१८ ॥

अम्बां प्रयाचे कुरु मे प्रसादं
यतिस्नुषासन्निधिमम्ब शीघ्रम् ।
संस्थाप्य तत्र प्रतिभीतिमुक्तः
संग्रामसैम्यागतयादवौघैः ॥ ३१९ ॥

एवं करोमीति त्वयोदिते तां
माणिक्यभूषाकपिशीकृताशाम् ।
दोर्भ्यां गृहीत्वाम्बरमारुरोह
ब्रुवन्निति श्रीधरशीरिपूर्वान् ॥ ३२० ॥

भो यादवाः पाण्डुसुताः सुभोजा
अन्येपि ये पुंस्त्वयुजोत्र पुर्याम् ।
वाक्यं मदीयं शृणुतैकचित्ता
यूयं यदि प्राज्यकुलप्रसूताः ॥ ३२१ ॥

भीष्मात्मजा चक्रपतेः प्रिया या
चेद्यं वराकं विनिहत्य पूर्वम् ।
द्वाभ्यां हृता विष्णुहलायुधाभ्यां
क्लेशेन संशीतिमुपागताभ्याम् ॥ ३२२ ॥

सा साम्प्रतं खेटसुतेन साध्वी
वीरेण नीलाब्जदलायताक्षी ।
तया मनोज्ञा ह्रियते द्रुतं भो
रोद्धुं क्षमाश्चेल्लघु रुन्धतां च ॥ ३२३ ॥

व्रजाम्यदत्वा न हि युद्धमस्मा—
त्संभूय सर्वेपि यथास्वमेता ।
नेष्याम्यमुं स्वेष्टपदं च पश्चात्
स्वेष्टानुसारी न मलिम्लुचोहम् ॥ ३२४ ॥

वाक्यं समाकर्ण्य सभा यदूनां
चुक्षोभ वाताहतवार्द्धिवारि ।
प्राघूर्णितोत्तुङ्गतरङ्गलीला
रोषाज्ज्वलद्वाडवसंहतिर्वा ॥ ३२५ ॥

शीरी सितोप्युग्रतुपांगभाजां
भिये बभूवारुणतां प्रपन्नः ।
स्फुरत्सुदन्तावृतिरत्र लोके
च्युतस्वभावो हि भिये न कस्य ॥ ३२६ ॥

पाण्डोः सुता भीमधनंजयाद्या-
श्चेलू रुषा चारुवरासनेभ्यः ।
ज्येष्ठोपि संज्ञां सुयुधि स्थिरत्वात्
ख्यातिं नयन्धीरतयावतस्थे ॥ ३२७ ॥

केप्यत्र वक्षःस्थलमग्रहस्तैः
परामृशन्तः परुषोक्तयोरम् ।
अन्ये तु केयूरमणिप्रदीप्ता-
न्दष्टाधरा बाहुतटान्प्रजघ्नुः ॥ ३२८ ॥

राजाङ्गजाः केचिदवाप्तरोषा
युयुत्सवो मानधना सगर्वाः ।

पूर्णेन्दुवक्त्रद्युतिपूर्णशोभाः
समं चलाङ्गा जहसुर्नितान्तम् ॥ ३२९ ॥
चकम्पिरे केचिदतीवरोषात्
क्रुधापरे बभ्रमुरन्धवच्च ।
बभञ्जुरन्ये महतः शिलामया—
ननेकशः स्तंभगणान्महौजसः ॥ ३३० ॥
क्षुब्धेषु योधेष्विति केचिदूचुः
स्वल्पैर्भवद्भिर्न हि जेय एषः ।
ततो भटानां प्रतिबोधनाय
सङ्ग्रामभेरी सहसा प्रदेया ॥ ३३१ ॥
भेर्या निनादं तु निशम्य सर्वे
कार्याणि मुक्त्वार्द्धकृतानि सद्यः ।
भीताः समाश्वास्य रहः स्वकान्ता
द्वारावतीवीरभटा निरीयुः ॥ ३३२ ॥
केचिन्महाशौर्यमदेन वीराः
स्वाङ्गेपि चक्रुर्न हि कङ्कटानि ।
सङ्ग्रामतोषात्तनुपुष्टिभाजा--
मथापरेषां त्रुटितानि सद्यः ॥ ३३३ ॥
हस्त्यश्वसत्तुङ्गरथाधिरूढाः
कोदण्डखड्गत्रिशिखायुधाद्याः ।
शङ्खोरुभेरीपणवादिनादै
राजाङ्गणं सर्वनृपाः प्रपन्नाः ॥ ३३४ ॥
तुङ्गाः कुथप्रासरुचोभिसीम
मन्दाम्बुभिः प्लावितभूमिभागाः ।
कल्पान्तवातेन समं प्रणुन्ना
धाराधरा वा चलिता गजेन्द्राः ॥ ३३५ ॥

क्षितिं खनन्तः प्रखरैः खुराग्रैः
क्षोणीतलं व्याप्य समन्ततोपि ।
जग्मुस्तुरङ्गाः प्रतिवाजिनो वा
समाह्वयन्तो निजहेषितेन ॥ ३३६ ॥

दिव्यास्त्रशस्त्रैः परिपूर्णमध्या—
श्चीत्कारशब्दैर्बधिरीकृताशाः ।
मरुच्चलैः केतुकरै रथौघा-
श्चेलुर्युधं शत्रुमिवाह्वयन्तः ॥ ३३७ ॥

पतङ्गरश्मिस्फुरितासिमीन-
स्तुरङ्गमोत्तुंगतरङ्गमालः ।
क्षोणीशमाच्छाद्य पदातिसङ्घः
कल्पाब्धिकल्पः सहसा चचाल ॥ ३३८ ॥

पराजयस्य प्रतिबन्धकानि
दृष्ट्वा निमित्तानि सुभूरिशोपि ।
तथापि चेलुर्यदुपाण्डवाद्याः
किं वा विधत्ते न हि कोपवश्यः ॥ ३३९ ॥

कामोपि नीत्वा जननीं सकाशं
साधोः स्नुपावन्दितपादपद्माम् ।
विधाय सेनां महतीं क्षणेन
योद्धुं स्थितः प्राप्य धरां विशालाम् ॥ ३४

अधोक्षजाद्या हरिसाधने ये
क्षमाभृतस्तेपि बलेस्य शत्रोः ।
चिह्नानि तान्येव स एव वेषो
गृह्णीत जित्वेति वदन्ति नग्नाः ॥ ३४१ ॥

बलद्वयं वीक्ष्य रणोत्सुकं तत्
पुराङ्गनाः पूर्णशशाङ्कवक्त्राः ।

ऊचुर्महाहर्म्यतलाधिरूढाः
शमो यदि स्याद् द्वयमेव धन्याः ॥ ३४२ ॥
अहीव विष्णुः प्रतिभाति मातः
जगत्प्रसिद्धानखिलान्नरेन्द्रान् ।
कुमारकाशाद्बहुवंशजातान्
योषाकृते मारयितुं प्रवृत्तः ॥ ३४३ ॥
इत्यादिवाक्यानि मनःस्विनीभ्यः
शृण्वन्भटानां निवहः सहर्षम् ।
पुरः प्रतोलीं समवाप वेगात्
केचित्पुनः शत्रुपताकिनीं च ॥ ३४४ ॥
वेगात् प्रधाव्याहवमाविविक्षन्
वीरान्भटान् संरुरुधुः समंतात् ।
राजाज्ञया सत्प्रतिहारमुख्या
आत्मीयवर्ग्यानितरेपि नीत्या ॥ ३४५ ॥
रेणुर्घण्टाः सैन्ययोर्वारणानां
चक्रुः शब्दं काहलं काहलाश्च ।
भेरीभंभास्तूर्यभेदाश्च येन्ये
चेरुर्विश्वे व्याप्तदिक्काः समंतात् ॥ ३४६ ॥
नायं शत्रुः सूनुरेषस्ततः किं
हर्षस्थाने वा वृथा कोप एषः ।
स्कन्धावारस्याग्रतो भूय वेगा—
न्मन्ये विष्णुं वारयामास रेणुः ॥ ३४७ ॥
नास्त्येवात्र प्राणिजातस्य मृत्यु—
र्नूनं किं त्वं वारणायोद्यतोसि ।
कोपाद्दानैः सम्प्रवृत्तैर्गजानां
शान्त्या रेणुर्वारितो वा क्षणेन ॥ ३४८ ॥

इत्थं सैन्ये मान्मथे यादवीये
प्रत्यासत्तिं प्राप्तवत्युग्रकोपात् ।
किं स्याद्विघ्नो नैव सैन्यद्वयेस्मिन्
भीतान् द्रष्टुं देवदैत्याः समीयुः ॥ ३४९ ॥

इतिसिन्धुराजसत्कमहत्तमश्रीपप्पटगुरोः श्रीमहासेना-
चार्यस्य कृते प्रद्युम्नचरिते नवमः सर्गः समाप्तः ॥ ९ ॥

---

# दशमः सर्गः ।

कल्पान्ताब्धेस्तुल्ययोरग्रयोधे
सङ्घक्षोभूत्सैन्ययोरन्तराले ।
गर्जत्युच्चैः शत्रुपक्षेऽन्तिकस्थे
माध्यस्थं कः शौर्यशाली दधीत ॥ १ ॥

नागं नागो वाजिनं वाजिमुख्यः
पत्तिः पत्तिं स्यन्दनस्थश्च तत्स्थम्[1] ।
योद्धुं वेगात्प्राप हेतुं विनापि
प्रायो वैरं निर्निमित्तं हि लोके ॥ २ ॥

योधा योधैः सायकैर्भिन्नगात्राः
पेतुर्दन्तैर्दन्तिभिर्दन्तिनश्च ।
पर्यापुश्च स्यन्दनाः स्यन्दनस्थै—
रेवं युद्धं सेनयोर्भीममासीत् ॥ ३ ॥

खड्गाखड्गि क्ष्मारुहाक्ष्मारुहीत्थं
तूर्णं केशाकेशि दीर्घं बभूव ।
वीरैः कुन्ताकुन्ति कैश्चित्तु युद्ध—
मन्यैर्मुष्टामुष्टिकैरप्यकारि ॥ ४ ॥

योद्धुं कश्चित्प्रच्छदं वारणस्य
वक्त्राद्वाग्गान्नाक्षिपद्यावदेव ।
तावत्तूर्णं प्रत्यनीकस्य बाणैः
प्रोक्तः कुम्भे पिच्छवर्जं निमग्नैः ॥ ५ ॥

---

१ रथस्थम् ।

हस्तैर्हस्तान्योजयित्वा गजेंद्रा
दंतैर्दंतान् कुंचिताग्रप्रपादान् ।
कम्पिक्ष्माभृल्लीलया शोभमाना
दीर्घं चक्रुः क्रीडया चारु युद्धम् ॥ ६ ॥

अन्ये रेजुर्दंतिनः शस्त्रजालै-
श्छिन्ना धारा पंक्तिभिः श्रोणितानाम् ।
शैलाः शश्वच्छ्राविधातूदकानां
धाराभिर्वा निश्चलत्वं प्रपन्नाः ॥ ७ ॥

चक्रैश्छिन्नान् स्वान् गृहीत्वा करांघ्रीन्
शत्रून्स्वच्छं ताडयित्वा सहैव ।
पेतुस्तोपात्पूर्णचित्ता भटा ये
लुब्धा वार्ता नैव निःसारदेहे ॥ ८ ॥

एवं भीमे संयुगे कामसैन्यं
दृष्ट्वा नश्यत्प्रेपिता धीरयंतः ।
योधाः सर्वं सायकैश्छादयंतः
प्रेक्ष्योत्तस्थुस्तान्पुनर्यादवीयाः ॥ ९ ॥

साक्षाच्छीरी पाण्डवाद्याश्च वीरा
नामादेशं स्पर्द्धयाहूय गर्वात् ।
दिव्यैः शस्त्रैः प्राकृतैरप्युदारै—
र्मायायोधैर्युद्धवंतो यथास्वम् ॥ १० ॥

जात्याश्वानां हेषितैस्तूर्यनादै-
र्मौर्वीध्वानैः सिंहनादैर्भटानाम् ।
शस्त्राघातैर्गर्जितैर्वारणानां
स्वैर्निस्वानैः खं स्फुटद्वा ररास ॥ ११ ॥

लूनैर्दण्डैर्मूलतोद्भिदुवंक्रै—
र्मत्तेभाद्या तूर्णवाताहतानि ।

भ्रेमुर्व्योमन्यातपत्राणि शंके
प्रापुर्द्रष्टुं चंद्रविम्बानि जन्यम् ॥ १२ ॥

मा शंकिष्ठा देहि गाढं प्रहारं
कम्पं कस्माद्धारयस्युज्झ भीतिम् ।
केशान् शीघ्रं वीर संयम्य चास्त्रं
शस्त्रं भूमौ सुस्थितं संगृहाण ॥ १३ ॥

युद्धात्स्वर्गो नाप्यते नापि मोक्षः
कीर्त्या किं वा साध्यमाचक्ष्व मृत्वा ।
योषा मुक्त्वा सत्सुताश्चन्द्रवक्त्रा
मा युद्ध्यस्त्वं याहि मा स्थाः पुरो मे ॥ १४ ॥

इत्यन्योन्यालापदक्षा नृपेन्द्रा
मायायोधैस्तीव्रवाग्भिश्चिराय ।
ये युध्यन्ते वीरमानावलेपा
जघ्नन्तोरीन् चित्रशस्त्रास्त्रजालैः ॥ १५ ॥

शैलेन्द्राभैः पातितैः कुञ्जरौघै—
र्दुःसञ्चारैः स्यन्दनैश्चापि भग्नैः ।
भल्लूकानां फेत्कृतैरन्त्रभूषै—
र्वैतालैस्तद्भीममासीन्नटद्भिः ॥ १६ ॥

इत्थं वाणैर्मान्मथैः पाण्डवाद्यान्
ध्वस्तान्योधान्वीक्ष्य विष्णुः सुरोपात् ।
नागान् स्थित्वा स्यन्दने कृष्णशार्ङ्गी
विश्वं वाणैश्छादयन् संप्रचेले ॥ १७ ॥

तातं दृष्ट्वा सोपि वैलक्ष्यभावा—
न्मन्दं मन्दं स्यन्दनस्थः प्रतस्थे ।
तावच्चक्षुर्दक्षिणं वाहुनामा
विष्णोरिष्टाशंसि प्रस्पन्दतेस्म ॥ १८ ॥

क्षीणे सैन्ये संस्थिते बन्धुवर्गे
शत्रौ वापि प्रोद्धते युद्धशौण्डे ।
एतद्यन्मे स्पंदतेऽद्यापि नेत्रं
तत्किं भद्र प्रेक्षणीयं सुभद्रम् ॥ १९ ॥

प्राहस्यैवं सारथिश्चक्रिणं तं
यन्नेत्रस्य स्पन्दनं तत्प्रतीमः ।
संग्रामेस्मिन्वैरिणं देव जित्वा
लब्ध्वा कीर्तिं प्राप्स्यसि त्वं प्रियां च ॥ २० ॥

एवं विष्णुः सारथिः सोपि तुष्टः
प्रीत्यान्योन्यं भाषमाणौ महेच्छौ ।
शत्रुं भीमाटोपवंतं सुसारौ
प्राप्तौ प्राप्योवाच चैवं हरिस्तम् ॥ २१ ॥

दाराहर्ता न्यक्कृतेः संविधाता
बन्धून् हन्ता त्वं तथाप्यन्तरङ्गः ।
स्नेहोत्यन्तं येन नैवास्मि हन्ता
तस्माद्भार्यां नः समर्प्य प्रयाहि ॥ २२ ॥

उक्तोवोचन्मन्मथस्तं हसित्वा
केयं वेला स्नेहसम्बद्धबुद्धेः ।
हत्वा बन्धून्योषितश्चापि हृत्वा
बन्धुः स्याच्चेत्कीदृशः स्यात्तवारिः ॥ २३ ॥

शक्तो योद्धुं नो भवांश्चेद्वदेत्थं
भार्यां वीर त्वं हि मह्यं प्रयच्छ ।
शत्रोरुक्तं माधवस्तं निशम्य
प्रापच्छत्रुं मण्डलीकृत्य शार्ङ्गम् ॥ २४ ॥

भूमिव्योमाशेषदिक्चक्रवालं
बाणैर्विष्णुं छादयन्तं विलोक्य ।

चिच्छेद प्रागर्द्धचन्द्रेण धीरः
कामः किञ्चिद्विस्मितस्तस्य चापम् ॥ २५ ॥
विष्वक्सेनश्चापमन्यद्गृहीत्वा
यावद्वेगात्सम्मुखस्संप्रतस्थौ ।
तच्छित्वाहस्साङ्गजस्तं प्रहस्य
कस्मादीदृक् चापकौशल्यमाप्तम् ॥ २६ ॥
ख्याता भोजा यादवाः पाण्डवाद्या—
स्तेषां स्वामी शस्त्रविद्याप्रवीणः ।
धातुर्धैर्यं त्वीदृशं येन योधे
चापं स्वीयं रक्षितुं नैव शक्तः ॥ २७ ॥
योद्धुं वा यो वेत्ति नो किं स लोके
स्वेच्छाचारी जीवितुं नो लभेत ।
किं वा कार्यं भार्यया वान्धवैर्वा
जीवं याहि प्राप्नुहि त्वं सुखानि ॥ २८ ॥
इत्यादिहास्यवचनं प्रतताड शार्ङ्गी
कामं गृहीतधनुरुग्रशरैरनेकैः ।
यो रंगमर्म निखिलं त्वभणत्प्रसिद्धं
मायाविनोस्य मदनस्य रुषा क्षणेन ॥ २९ ॥
छत्रं ध्वजं रथनियुक्ततुरंगमांश्च
तत्सारथिं परिजनं च निपात्य भूमौ ।
तोषी स्वपक्षजयनिर्वृतिमाप्य यावत्
सन्तिष्ठते रथवरे किल यादवेशः ॥ ३० ॥
तावदन्यं समारुह्य रथं वेगान्मनोभवः ।
गुरुमात्मसमं चक्रे मायया किं न साध्यते ॥३१॥
दिव्यं स्यन्दनमारुह्य हरिर्वा यदुसत्तमः ।
क्रोधादाहूय सद्विद्यां मुमोच हुतभुक्शरम् ॥३२॥

स गत्वाथ शरो दिव्यप्रलयानिलसन्निभः ।
ददाह मान्मथीं सेनां परिवेष्ट्य समन्ततः ॥ ३३ ॥

स छात्कारं क्वचिद्वह्निः करोत्याश्रयशक्तितः ।
सात्कारञ्च क्वचिद्भीमः स्फुलिंगाणुनिरुद्धदिक् ॥३४॥

कटकान्तं स्फुटद्दीप्तिं हठाद्धाटकभूषणः ।
प्रदह्यमानं व्यालोक्य पावकं कार्ष्णिरादरात् ॥ ३५॥

ससरे वारुणं बाणं बाणासनपरिग्रहः ।
शरासनगतं वेगाच्चिक्षेप च रिपुं प्रति ॥ ३६ ॥

सोऽभिभूत्वा महामेघः शक्रचापविभूषितः ।
गर्ज्जत्सौदामिनीयुक्तो विमुञ्चन्नभितोऽशनीः ॥ ३७ ॥

मुशलाकारधाराभिः प्रवर्षन्नभितो जलम् ।
व्यदिध्यपत्क्षणेनामुं कृशानुमकृशात्विषम् ॥ ३८ ॥

अयुग्मार्चिषमात्मीयमवलोक्यापसारितम् ।
वायव्यास्त्रं महावेगं व्यमुञ्चन्मधुसूदनः ॥ ३९ ॥

तेनाक्षिप्ता नरेभाश्च रथाश्चापि विदूरतः ।
छत्रकेतुध्वजैः सार्द्धं पत्रसङ्घा इव क्षणात् ॥ ४० ॥

ततश्चिक्षेप कामोऽस्त्रं तामसं मोहकारणम् ।
भृंगाभ्राम्बरनागेन्द्रनीलं लोलमितस्ततः ॥ ४१ ॥

तच्चक्रे खलवृत्तिर्वा समं सर्वभुवस्तलम् ।
व्यामोहोत्पादिका वृत्तिस्तामसानां हि सर्वतः ॥४२॥

एवमादिभिरत्युग्रैर्दिव्यास्त्रैरितरैरपि ।
प्रहरन्तौ तावकार्ष्टां विस्मय खेटनाकिनाम् ॥ ४३ ॥

अस्त्रं हरिः क्षिपति यद्यदमोघमुग्रं
व्यर्थं बभूव तदरिं समवाप्य सर्वम् ।

आश्चर्यमेवमथवा न हि चित्रमेतत्
स्वस्मिन्कुले न हि शराः प्रभवन्ति दिव्याः॥४४॥

इति नितान्तखलीकरणाकुलः
सकलशस्त्रनिरर्थविलक्षधीः ।
निजबलक्षयदुःखवशीकृतः
फणिरिपुर्मनसा धृतनिश्चयः ॥ ४५ ॥

दृढपरिकरबन्धो बाहुयुद्धं विधित्सु-
र्विरहितरथयानो भूतले न्यस्य पादौ ।
शिथिलितवसुधाभृत्सन्धिरुन्निद्रकञ्ज-
द्युतिरतिभयदोक्तिस्ताम्रदंष्ट्रैर्ढौके ॥ ४६ ॥

पितरमधिकरोषात्प्राप्तमालोक्य साधु-
र्गगनतलविमानं स्तम्भितं द्राग्विमुच्य ।
प्रतिभयचकिताभ्यां वीक्षितो मातृभार्ये
स्थिरगुणयुवतिभ्यां मन्मथो विप्रचेले ॥ ४७ ॥

दिक्करीन्द्रनिभयोरथ मध्यं
नारदः समुपगम्य जगाद ।
आरुचेष्ट किमिदं मधुशत्रो
साम्प्रतं निजसुतेऽपि विधातुम् ॥ ४८ ॥

कालसम्बरगृहे समगाद्यो
वृद्धिमाप्य च स षोडशलाभान् ।
षोडशाब्दवयसा कृतभूषः
प्रापितस्तव समीपमिदानीम् ॥ ४९ ॥

त्वमपि मदन किं भो चेष्टसे त्वातरीत्थं
पितरि सकलपूज्ये स्नेहगेहे मुरारौ ।
सकलनरपतीन्द्रैः सेव्यपादारविन्दे
कुरुवर करणीयं पुत्र मुञ्चान्यचेष्टाम् ॥ ५० ॥

इति निगदति साधौ माधवोऽत्यन्ततोषा-
न्निखिलबलविनाशोद्भूतशोकाच्च मन्दः ।
द्रुतगतिरिति कामं प्राह वत्सेहि शीघ्रं
निजभुजवरगाढाश्लेषसौख्यं प्रयच्छ ॥ ५१ ॥

वचनमिदमुपेंद्रस्यातिसस्नेहगर्भं
श्रवणसुखदमुच्चैरङ्गजस्तन्निशम्य ।
क्षितिविनिहितमौलिः केशवस्यांघ्रिपद्मं
तदनु पुनरनंसीत्कामपालस्य पादौ ॥ ५२ ॥

अविरलपुलकौघैः सूचितान्तःप्रमोदः
प्रविगलदुरुबाष्पैर्मूर्ध्नि सिञ्चन्नितान्तम् ।
तनुजमिति विलोक्य प्रस्फुरद्गात्रयष्टिः
स्वविदलवचितदोर्भ्यामालिलिंगातिगाढम् ॥ ५३ ॥

तदनु वदति तोषात्पूर्णचित्तो मुनिस्तौ
किमिह चिरमकार्यं तिष्ठतोद्यापि वीरौ ।
प्रविशतमतिलोलापांगदृङ्नागरीणां
नयनमुदमनूनां प्रापयन्तौ पुरीं स्वाम् ॥ ५४ ॥

निगदितमुपकर्ण्योवाच नारायणस्तं
क्षयमुपगतसैन्यौ बन्धुभिर्विप्रयुक्तौ ।
पुरि विपुलतरायां द्वौ नरौ निर्नरायां
वद कथमिह शोभां धारयावो विशंतौ ॥ ५५ ॥

मुनिरिति हरिवाक्यं दैन्ययुक्तं निशम्य
प्रहसितमुखपद्मोऽवोचदित्थं मुरारिम् ।
अहिदमन न कश्चिन्मन्मथेनाजिमध्ये
गजतुरगपदातिष्वर्दितः परमार्थ्यात् ॥ ५६ ॥

अयमतिशयविद्यः सर्वविद्याधरेशः
सकलजनमनोज्ञो मायया जेतुमीशः ।

त्रिभुवनमपि नो वा मारयत्यार्द्रचित्तो
रिपुमपि बलशाली किं पुनर्बंधुलोकम् ॥ ५७ ॥

भव मुदितमनस्कस्त्वं मुरारे प्रकामं
सकलमपि च सैन्यं त्वं समुत्थाप्य पित्रे ।
स्वजनसुखसमुत्थं देहि शर्माङ्गज त्वं
इति मुनिवचनेनोत्थापयत्सोपि सर्वम् ॥ ५८ ॥

तुरंगमातंगरथाधिरूढा
नरेन्द्रभीमार्जुनसारणाद्याः ।
प्रबुद्धनीलोत्पलपत्रनेत्राः
समुत्थिता विस्मयपूर्णचित्ताः ॥ ५९ ॥

घंटारवप्रतिनिरुद्धदिशो गजेंद्रा
अश्वाश्च निष्ठुरखुरक्षतमेदिनीकाः ।
उत्केतवश्चटुलतुंगहयारथौघाः
युद्धे च सत्वरमुदस्थुरमी च योद्धाः ॥ ६० ॥

एवं चतुर्विधबले मिलिते च भूरि—
व्यालोलहेतिततिरुद्धदिगंतराला ।
आनंदपूर्णवदनो मदनागमेन
प्रोवाच सूनुमिति मानधनो मुरारिः ॥ ६१ ॥

स्वां मातरं युवतिमप्यचिरान्मनोज
द्रागानयानय सुखप्रद धैर्यराशे ।
पित्रोदितं वचनमित्थमदो निशम्य
कामोकरोदथ तथैव विनीतवर्यः ॥ ६२ ॥

संमार्ज्य सर्वविशिखांतरमम्भसाति-
सद्गन्धिना समभिपिच्य विचित्रपुष्पैः ।
आगुल्फपूर्णविपणिं रचिताद्रिशोभा-
मुत्तोरणां मुररिपुर्मदनेन सार्द्धम् ॥ ६३ ॥

उदधिविजयपूर्वानानमस्यांगजेन
भुवनविधुमनंगं द्रष्टुकामाः समन्तात् ।
पटुपटहनिनादैः क्षोभयन्पौरनारी—
हरिरिव सजयन्तः स्वां पुरीमाविवेश ॥ ६४ ॥

यदि भवति नरश्चेत्कामदेवेन तुल्यो
भवतु निजविभूत्या निर्जिताशेषभूतेः ।
रिपुसमितिविजेता भोगगेहं यशस्वा-
नितरनृभिरहो किं कष्टकर्माभिरूपैः ॥ ६५ ॥

यदि भवेत्तनुजो रमणीजने
भवतु कामसमः सकृदेव हि ।
भवति चेज्जननी निजपुण्यतो
रुक्मिणीसदृशी भवतादिह ॥ ६६ ॥

किमु कुलमिह पुण्यं यादवानां हरिर्वा
किमुत खचरनाथः काञ्चनस्रक्सनाथः ।
किमु गजपुरनाथस्यांगजा पुण्यगेहं
गुणनिधिमदनस्य प्रापितः किं पुरीयम् ॥ ६७ ॥

क्षितिपतिसुत एषो यो हृतो जातमात्रः
खदिरवनशिलाधःस्थापितः सम्पिधाय ।
किल खचरनृपेण प्राप्य संवर्धितो यः
प्रभुरिह पितृगेहं प्राप्तवान्मातृपुण्यात् ॥ ६८ ॥

रिपुरपि वरबन्धुर्जातवानस्य हर्ता
यदि पुरि परमर्द्ध्या वर्द्धितोऽसौ महात्मा ।
क्व नभसि गतिरस्य क्व प्रधानोरुलम्भः
क्व च कुसुमधनुष्मान्स्याज्जगत्यां प्रसिद्धः ॥ ६९ ॥

सर्वस्याभयदानदुश्चरतपोनुष्ठानपूजादिना
नूनं पुण्यमनेन सञ्चितमलं जन्मान्तरे निर्मलम् ।

इत्थं शौर्यमनाविला गुरुजने भक्तिर्यशश्चेदृशं
लक्ष्मीः स्यादिदमन्यथा कथमहो रूपं च नेत्रोत्सवम्॥ ७० ॥

शृण्वन् जनोक्तमिति राजगजाधिरूढः
श्वेतातपत्रभिनचामरवीज्यमानः ।
सीमन्तिनीजनविलोचनकैरवेन्दुः
सम्राट् शनैः कृतसमुत्सवमाप वेश्म ॥ ७१ ॥

शितिसंवरोथ दयितासहितः
खगकन्यकाः समुपगृह्य वराः ।
विनिशम्य कीर्तिमिति तस्य मुदा
समुपाययौ रतिपिता च खगः ॥ ७२ ॥

प्रकृतिललितमूर्तिश्चारुवीणा स्वराया
जनितजनमुदोस्या विश्वरूपाप्तकान्तेः ।
कनकयमलकुम्भोद्भासिपीनस्तनाया
विकसितकमलश्री वक्त्रशोभान्वितायाः ॥७३॥

विततवहलधूपाकृष्टभृंगालिकास्याः
त्रसितशिशुमृगाक्ष्या लोलकेतूद्ध्वबाहोः ।
यदुनरपतिपुर्य्याः कामवीवाहतोषा-
द्भवदधिकशोभा योषितो वा परैव ॥ ७४ ॥

गगनतलमशेषं छादितं केतुवृन्दैः
समदकरिघटाभिर्मण्डिता वाजिभिश्च ।
खचरयुवतिसङ्घा नेटुरुत्तंगपीन—
स्तनजघनभरेणानम्रमध्याः समन्तात् ॥ ७५ ॥

क्वचिदतिशयनृत्यं कुत्रचिद्दैयवाद्यं
क्वचिदुरुमणिमाला तोरणान्युन्नतानि ।
ललिततुरगवृन्दं स्यन्दनानां क्वचिच्च
जितसकलमृगाङ्कश्छत्रसङ्घः क्वचिच्च ॥ ७६ ॥

इति सकलविभूत्यां चिन्तितोपस्थितायां
रुचिरचरुभिरुच्चैर्दीप्तदीपैश्च धूपैः ।
जिनपतिपदपूजां संविधायादरेण
अभवदथ विवाहः कामरत्योस्तदानीम् ॥ ७७॥

सुरयुवतिसमानाः पञ्चशत्याग्रसंख्या
उदधिसमरमण्यो लीलयोपायतासौ ।
खचरपतिभिरेवं निर्म्मिते सद्विवाहे
स्वजनपरजनौघैः पूजिते चानुपूर्व्या ॥ ७८ ॥

अथ सभागतमाह यदूत्तमो
जिगमिषुं खचरेश्वरमन्यदा ।
शिशुममुं परिपालितवान्यत—
स्तव सुतः प्रथमं चरमं मम ॥ ७९ ॥

इति विचिन्त्य समं यदमुष्य त—
त्खचरनाथ विधेयमहो त्वया ।
अभिदधाविदमेव च रुक्मिणी
समभिनन्द्य परं कनकस्रजम् ॥ ८० ॥

इच्छाविभूत्योः सदृशं मुरारिं
सम्पूजयित्वा दयितासमेतम् ।
विमुच्य दुःखादथ सोपि काम-
मालिंग्य संचुम्ब्य जगाम धाम ॥ ८१ ॥

अथ गतवति खेटे क्ष्मापतावाप्तपूज्ये
सकलयदुनरेभ्यो भोजपाण्ड्वादिकेभ्यः ।
मुदितमनसि विष्णौ तत्कुले चाप्यशेषे
विगतशुचि जनन्यां नारदे चापि जाते ॥ ८२ ॥

विलासिनीवक्त्रसरोजषट्पदः
सुखामृताम्भोनिधिमध्यवर्ती ।

निषेव्यमाणः स्वजनैर्दिवानिशं
विवेद कालं न गतं मनोभवः ॥ ८३ ॥

अथ मदनविवाहप्रेक्षणोद्भूतदुःखा
स्वतनयमपि सत्या याचयित्वाऽन्यकन्याः ।
कमलवदनकाभिः प्रापयच्चारुभूत्या
ललितकरगृहीतिं भानुमुत्तुंगकीर्तिम् ॥ ८४ ॥

जन्मन्येव हृतोरिणातिविषमे क्षिप्तोथ गर्ते तथा
दत्ता चैव महाशिला च विजनेऽरण्ये स्वपुण्यात्ततः ।
वालो लब्धजवोत्सवः खचरपेनानंद्य संवर्धितो-
ज्ञानी मानधनः शुचिर्निजयशोध्वस्तारिदर्पोदयः॥८५॥

विद्येशो विपुलाहवाप्तविजयः सत्येष्टविध्वंसको-
प्यत्यंतं भुवि सत्यवाक् प्रियतमो लोकस्य येनाभवत् ।
सोयं धर्मदिवाकरो जिनमतः सेव्यो वुधैः संततं
संसारांवुधिशोषणेतिनिपुणो भव्याब्जिनीवांधवः॥८६॥

इति श्रीसिन्धुराजसत्कमहामहत्तमश्रीपप्पटगुरोः पण्डितश्रीमहासेना-
चार्यस्य कृते प्रद्युम्नचरिते दशमः सर्गः ॥ १० ॥

जननि सप्तमजन्मसहोदरः
सुरपतिः किलमेव तरिष्यति ।
क्षितिपतेस्तनयत्वसमीहया
निजजनार्द्धिदितं न मृषा भवेत् ॥ १३ ॥

तनुभवं यदि वाञ्छसि तं सुरं
जितनिशाकरहारमपि द्युता ।
खगसुतादिवसे च ततोऽम्बिके
तव करोमि तदाकृतिकं वपुः ॥ १४ ॥

तदुदितं च निशम्य जगाद सा
स्मितमुखाम्बुरुहा मदनं प्रति ।
तव समः किमु पुत्र सुतो भवे-
न्न हि समोस्ति रवेरिह विष्टपे ॥ १५ ॥

इयमतीव मम प्रियकारिणी
सुत सपत्न्यपि जम्बवती सदा ।
सुरमतः कुरु जम्बवतीभवं
सदुपकारफला हि विभूतयः ॥ १६ ॥

तदुदितं च निशम्य मनोभवः
प्रकृतितो जननीवचनाद्दतः ।
अवसरं च निरूपयितुं पुनः
कृततनुः स्थितवानिति माधवः ॥ १७ ॥

अथ वसंतमहोत्सवसंगते
शुभदशुल्कभवे दशमे दिने ।
अवतरिष्यति निश्चयतो भुवं
सुरप इत्यवगम्य जनार्दनः ॥ १८ ॥

निजवधूं प्रथमां वनजाननां
सुतदिनत्रयलम्भवितोषिणीम् ।

समुपगृह्य गतो गिरिसन्निधौ
वनमनन्यसमं कुसुमाकुलम् ॥ १९ ॥
अवसरेऽत्र करांगुलियोजित-
प्रवरमुद्रकया क्षणमात्रतः ।
मुदितजांबवतीमपि केतुजा-
कृतितनुं प्रजिघाय मनोभवः ॥ २० ॥

प्रलघुभिः परिवारजनैर्वृता
तदनुकारमियाय च मुद्रया ।
समभिगम्य च रैवतकं गिरिं
रतिमवाप्य च हारमवाप सा ॥ २१ ॥

व्यपगमय्य करांगुलिमुद्रिकां
स्मितपुरःसरमाह निजागमम् ।
इति कृते च तया हरिरुक्तवान्
किमिदमित्यभिधादथ शार्ङ्गिणम् ॥ २२ ॥

समुपहस्य जगाद हरिः पुन—
र्मदनचेष्टितविस्मितमानसः ।
जगति पीनघनस्तनिकस्य क—
स्तनुभृतां कुरुतेऽत्र हिताहिते ॥ २३ ॥
स्वकृतकर्म करोति सदैव ते
तदिह पुण्यमिति प्रतिपादितम् ।
सुतमिमं प्रथमप्रिययोषिते
किल ददामि सदा परिभाविते ॥ २४ ॥

विपुलपुण्यमदाच्च तव प्रिये
भवतु नैव तथापि मम क्षतिः ।
यदि भविष्यति तु त्रिदिवच्युत-
स्तव तनौ मदनानुजकैटभः ॥ २५ ॥

प्रचुरपुण्यतया स महाप्रभः
पृथुयशाः किल संवं[1] इति श्रुतः ।
श्रितसुरेश्वरगर्भमनोहरा—
मिति निगद्य चिरं प्रजिघाय ताम् ॥ २६ ॥

रतिगृहे किल यावदसौ स्थितः
प्रथमयोपिदवाप शचीसमा ।
कुसुमतल्पतले मृदुपल्लवे
भ्रमरसंहतिगीतमनोहरे ॥ २७ ॥

शिशिरमारुतनुन्नपरिश्रमे
तपनुदुत्तमशाखिभिरावृते ।
मधुमदारुणलोचनया रण—
न्मणिविभूषणभूपितया गलत् ॥ २८ ॥

त्रपविजृम्भितकामविकारया
भणितनिर्जितहंसवधूटया ।
विविधविभ्रमहासविलासस-
चटुलमन्मनभाषणदक्षया ॥ २९ ॥

चिरमरंस्त रतश्रमसम्भव-
स्विदिलवैश्चितचारुशरीरया ।
इति रते सति तत्र दिवच्युतः
प्रथमयोषिति गर्भधरोऽभवत् ॥ ३० ॥

सकलयादवचित्तहरौ हितौ
प्रियवधूद्वयगर्भसमुद्भवौ ।
प्रतिदिनं जय एव समृद्धयो
यदुकुलस्य मुदश्च निरंतराः ॥ ३१ ॥

---

१ क. ख. पुस्तकयोर्यद्यप्ययमेव पाठः परन्तु कोषे शुभयुक्तार्थकः शंव इति पाठ एव वर्तते स एव समीचीनः प्रतिभातीति ।

समभवंस्तु तयोर्वरगर्भयोः
पृथुफलोदययोरभिवृद्धितः ।
नवनवोदयदेषु नवस्वथो
व्यपगतेष्वथ मासगणेषु सा ॥ ३२ ॥

सुतमसूतसुजंववतीस्फुर-
द्वरमणिप्रचयाभमनुत्तमम् ।
कमलनाभिसुसारथिदारक-
प्रथमसूनुरभूद्धि सुदारकः ॥ ३३ ॥

प्रथितवीरमहाहरिमंत्रिणो
ऽप्यभवदेव हि बुद्धिसुसेनकः ।
गरुडकेतुचमूपतिदेहजो
जयपदातिरभूद्वरसेनकः ॥ ३४ ॥

इति चतुर्भिरमैकदिनोद्भवैः
प्रववृधे वरजंववतीसुतः ।
सुतसुभानुमसूत सुभामिका
जितसुभानुमनेकसुलक्षणम् ॥ ३५ ॥

ललितबालकचेष्टितमम्बुज—
प्रचयकान्तिधरं कमलेक्षणम् ।
यदुकुलाखिलयोषिदनुत्तम-
प्रवरपङ्कजिनीवरषट्पदौ ॥ ३६ ॥

करतलात्करतः पुरि लीलितौ
विविधभूषणवेषविभूषितौ ।
नयनचित्तहराद्भुतचेष्टितौ
रणितकिंकिणिसच्चरणोज्ज्वलौ ॥ ३७ ॥

मदनभान्वनुजावुरुचेष्टिता—
वनुदिनं परिवृद्धिमवापतुः ।

इति विचित्रकलागुणनायका—
वधिकरूपयुतावतिमुग्धकौ ॥ ३८ ॥
रुचिरवाल्यवयोव्यतिलङ्घनौ
वरकुमारवयोधिरतौ मतौ ।
अथ कदाचिदनेककुमारकैः
परममित्रतया परिवारितौ ॥ ३९ ॥
कुसुमचित्तमनोहरमण्डपे
हरितनूजसुशंवसुभानुकौ ।
वलपुरःसरयादवसाक्षिकं
स्फुटदुरोदरसद्रतिकारिणौ ॥ ४० ॥
अथ वभूवतुरुन्मदवेपिणौ
गृहगृहीतसुकोटिसवर्णकौ ।
द्रुततरं च जिगाय तमंगज—
प्रियतमो वरभानुसहोदरम् ॥ ४१ ॥
जितहिरण्यककोटिविलक्षधीः
समभवत्स्वजनैः सह भामिका ।
पुनरपि प्रजिघाय सुतं खला
शतनिनादवतो वलतः सभाम् ॥ ४२ ॥
खचरकुर्कुटकस्य जिगीषया
द्विकसुकोटिधनं पटुभामिका ।
तमपि वालवियोगविलापिनीं
समुपलभ्य जिगाय च कुर्कुटीम् ॥ ४३ ॥
पुनरतीव विलक्षतयाऽभव—
न्मृतसमाथ सुकेतुसुता चिरम् ।
पललगन्धजितान्यसुगन्धक—
श्चतुरुदग्रककोटिपदुन्मदी ॥ ४४ ॥

प्रथितशंवकुमारवरोप्यदा—
निखिलमर्थिजनाय धनं तदा ।
उदितरोषमनाः पुनरप्यरं
सदसि भाणयतिस्म मदोद्धतम् ॥ ४५ ॥

वसनकान्तिजिताग्रगुणामहं
कनककोटिमनूनतमां ददे ।
इति तदप्यजयद्भुतभुक्शिखा—
विमलतायुगनूनसुतेजसा ॥ ४६ ॥

कनकतन्तुविनिर्मितविस्फुर—
द्रुचिरवस्त्रयुगेन विलोभधीः ।
पुनरदात्तदपि क्षपिताद्भुतः
कनकसन्मणिकुण्डलहारकैः ॥ ४७ ॥

पुनरभूद्विजिगीषुरतो जितो
विजयषोडशकोटिधनं ददौ ।
मदनबुद्धिबलेन सकौस्तुभं
समुपलभ्य तदाभरणोज्ज्वलः ॥ ४८ ॥

प्रजितवानथ जंबवतीसुतः
खगपकेतुसुतातनुजं तदा ।
ददभूदखिलार्थमथार्थिने
प्रियतमो निखिलस्य जनस्य च ॥ ४९ ॥

त्रिभुवनेऽमितवस्तु ददज्जनः
प्रियतमो न भवेदिह कस्य वा ।
चलनिदर्शनतश्च जिगीषुकः
खगबलौघसुगर्वितमानसः ॥ ५० ॥

स्वकजनन्युदितादकरोद् ग्रहं
द्विगुणकोटिधनं प्रथमोदितात् ।
तुरगवत्कृतसर्वविभूषणः
पुरि समस्तजनैरतिवीक्षितः ॥ ५१ ॥

भ्रमणरेचकतः प्रतिवाह्य तं
जितवताथ जितोऽनितमत्सरः ।
कनकवाहनकर्मतया ग्रह—
द्वयमतिसंयतोप्यभिधाय तु ॥ ५२ ॥

स्थितवति प्रियकीर्तिसुभानुके
मनसि कार्यमधान्मदनानुजः ।
यदि जयामि महाधिकसेनया
किल ददाति मतं ग्रहमत्र मे ॥ ५३ ॥

कनकवाहनकर्मतयाप्ययं
तदपि दुर्घटमत्र करोमि किम् ।
इति विचिन्तयते मदनो ददा-
द्विजयघोपसुरेन्द्रसुजालके ॥ ५४ ॥

तदुपलब्धिचलाद्बलदर्शने
विजितवान् लघु भानुसहोदरम् ।
ग्रहितया त्वपनेतुमशक्यया
तुरगतामुपनेतुमभीष्टवान् ॥ ५५ ॥

बलयुधिष्ठिरभीमपुरःसरैः
कथमपि प्रतिबोधमवापिता ।
हरिरदान्मुदितोस्य निजं पदं
नृपमतं मितमासदिनं स च ॥ ५६ ॥

अनुभवन् सुखमास्त हृषीकजं
सखिभिरेकदिनप्रभवैः समम् ।

---

१ होडकम् ।

अथ कदाचिदमुं सुकुलस्त्रियां
वलतया कृतशीलविखण्डनम् ॥ ५७ ॥

समवगम्य पराभवशंकिनी
हरिमुपालभते जनताखिला ।
हरिरपि प्रतिबुद्धसुताहितो
ऽभ्युपगतेषु दिनेषु गतेष्वथ ॥ ५८ ॥

स्वकृतदोषविदूषितमात्मजं
पुरवरात्कुपितो निरजीगमत् ।
हरिमप्रच्छदसौ पुनरादृतः
कथय देव ममागमनं कदा ॥ ५९ ॥

अवददेष यदा प्रथमप्रिया
सह मुदंकनिवेशितमादरात् ।
पुरजनस्य समक्षमनल्पया
जनमनोहरमङ्गलसम्पदा ॥ ६० ॥

पुरवरं प्रविवेशयति स्वयं
प्रविश शंव तदा क्रियते क्षमा ।
पुरवराच्च निरित्य स तत्क्षणा-
त्तरुणयोषिदभूदधि तद्वनम् ॥ ६१ ॥

तदनु तामवलोक्य तनूदरीं
समुपश्रित्य च संस्कारिणी जगौ ।
अवगणा किमु तिष्ठसि कन्यके
ललितवेषधरा विजने वने ॥ ६२ ॥

इति निशम्य जगाद च तामसौ
शृणु तवास्ति परं यदि कौतुकम् ।
नृपसुताहमनूढतया स्वकैः
परिजनैर्जनकेन समं पुरम् ॥ ६३ ॥

उपगता न च वेद्मि गतः क वा
मम पितात्र ततः स्थितवत्यहम् ।
इति निशम्य गृहं प्रतिवेश्य तां
शयनभोजनवस्त्रविभूषणैः ॥ ६४ ॥

अनुदिनं प्रतिपालयतिस्म सा
कनकचारुलतामिव कोमलाम् ।
व्यपगतेषु दिनेष्वथ केषुचि-
न्मदनमोदिवसन्तसमुत्सवः ॥ ६५ ॥

समभवज्जनतामुदमावहन्
दिशि दिशि प्रसरन्मलयानिलः ।
मधुपकोकिलनादनिनादके
विविधपुष्पसमृद्धिसमाकुले ॥ ६६ ॥

सति मधाविति भानुसहोदरः
समवयस्यगुणैर्मुदितः परम् ।
रथतुरङ्गमवारणपङ्क्तिभिः
परिवृतः पुरकान्तिविलोकने ॥ ६७ ॥

निहितदक्कलवन्दिजनैः स्तुतो
निरगमन्मधुसम्पदमीक्षितुम् ।
मधुरतारगुणं प्रमदावहं
समययोग्यमनंगशरारवम् ॥ ६८ ॥

प्रतिमुक्तविकारमथाश्रृणो-
द्युवतिगीतमनन्तगुणालयः ।
श्रुतिसुखं प्रणिशम्य तदाभवत्
कुसुमबाणशिलीमुखताडितः ॥ ६९ ॥

तमवलोक्य तथा स्थितमङ्गजम्
समुपयाच्य च तां वरकन्यकाम् ।

पुरजनैरभिवीक्षितमंगलं
प्रतिविधाय निजांकविवर्तिनीम् ॥ ७० ॥

मधुभिदोग्रवधूः स्वयमादरात्
समधिरोप्य करेणुमथानयत् ।
कृतपिशाचमृगाधिपतद्वयः
सरभसं च तदा मदनानुजः ॥ ७१ ॥

हरितनूजसुभानुकृते स्त्रियां
करगृहीतिमशंकतयाकरोत् ।
तदवगम्य जनैः कथितं हरिः
प्रमुदितो जननी च विशेषतः ॥ ७२ ॥

विमदभामिकयान्यवधूजनै-
रकृत पुत्रविवाहविधिः पुनः ।
उपहसन्नुपसृत्य पितामहं
चिरपरिभ्रमणात्तवरांगनम् ॥ ७३ ॥

शतवधूवरतामदमुद्वहन्
चिरमरंस्त च भानुसहोदरः ।
मदनशंवकुमारवरावथो
विदितरुक्मिसुतामुपयाच्य ताम् ॥ ७४ ॥

अनुपलभ्य विलक्षतया बला-
दहरतां स्वपचाकृतिधारिणौ ।
सकलयादवचित्तहरोंगजः
प्रतिनिधिर्वनिताजनवल्लभः ॥ ७५ ॥

अभवदत्र तयोस्तनुजोऽचिरा—
द्यमनुरुद्ध इति ब्रुवते जनाः ।
इति स शंवतनूजपुरःसरैः
स्वजनबन्धुजनैःपरिवारितः ॥ ७६ ॥

विषयजं सुखमम्बरगामिभिः
समुपनीतमभुंक्त निरन्तरम् ।
भवनपर्वतनद्युपसागरे
निषधनीलतटे वरपर्वते ॥ ७७ ॥

अनुबभूव मनोभवसत्तमो
नयनकान्तवपुर्निजवल्लभाः ।
ऋतुषु षट्स्वनुरूपमिति प्रभुः
प्रणयिनीजनचित्तहरक्रियः ॥ ७८ ॥

समुदुदारमदो रमणप्रियैः
परिजनैः परिसेवितशासनः ।
सुरभिपाटलचूतसुचम्पक-
स्फुरितकिंशुकमाधविकागलत् ॥ ७९ ॥

वकुलनागजकेतकयूथिका-
प्रभृतिपुष्परजोरुणादिङ्मुखे ।
बहुरुचिः कृतपुष्पविमानमुक्
प्रियकृतागसि तोषविकासिनि ॥ ८० ॥

स्फुरितचेतसि मासि वसन्त इ—
त्यभिमते पथिकांगवितापिनि ।
ललितयौवनगर्वसुनिर्भर-
प्रवरनाटकगीतविदंगना ॥ ८१ ॥

समितिमध्यगतो गतविघ्नक-
श्चिरमरंस्त सुखं मकरध्वजः ।
तदनुमासि शुचौ सुविचेष्टितः
क्षपितवृक्षसरस्यतितापिनि ॥ ८२ ॥

चलहचम्पकरेणुकदम्बके
कुसुमनिर्भरशोभितमाल्लिके ।

तदनु भाविनि मासि विदाहिनि
कुसुमपल्लवसंस्तरणे द्रवः ॥ ८३ ॥

विपुलदूष्यपटावृतभूमिके
किसलयांकुरहारमृणालिका ।
मलयजादिसुदिग्धवपुश्चिरं
शिशिरवारिसुसीकरशोभिते ॥ ८४ ॥

मधुरपानविधूनपरिश्रमः
भ्रमरताम्बुविहारविदग्धिका ।
प्रियतमाभिरमा मकरध्वजः
चिरमरंस्त सुखं गतविघ्नकः ॥ ८५ ॥ (?)

गजघटाभपयोदनिरन्तरे
स्फुरितविद्युति गर्जितभीषणे ।
अमरचापविभूषितदिङ्मुखे
दिशि दिशि भ्रमदुन्मदचातके ॥ ८६ ॥

कुटजकन्दलनीपसुकेतुकी
वरशिलीध्रकदम्बपुरःसरम् ।
कुसुमनिर्भरसर्वदिशि भ्रम-
द्धवलपक्षिगणे समये सति ॥ ८७ ॥

रतिपरिश्रमनोदिसुसीकरैः
कृतरतिर्वनितासहितः पतन् ।
जलसमूहनिरीक्षणकौतुको
ऽभजत सौख्यमनन्तसुतः परम् ॥ ८८ ॥

तदनु शुभ्रघनैर्विरलैर्नभः
समभवच्छतमन्युशरासनैः ।
अनुदिशं निचितं कुसुदाकर-
प्रतिमशुभ्रचयैरतिनिर्मलैः ८९ ॥

तदनु योग्यतमैरतिहेतुभि-
वैरतनुर्वनिताजनमध्यगः ।
अरमताद्भुतभोगनिधिर्महान्
सुरपतिप्रतिमोथ दिवानिशम् ॥ ९० ॥

कमलकांतिविनाशिनि निष्पत-
द्धिमसमूहविमर्दितभूरुहे ।
भवनगर्भगृहे रमते चिरं
हरिसुतः प्रथमो हिमवत्क्षणे ॥ ९१ ॥

मदनभोगमिमं परिवर्जित-
प्रमितिमद्भुतरूपमहो जनाः ।
परिनिशम्य निरस्य विमूढतां
कुरुत किं न तदर्जनकारणम् ॥ ९२ ॥

सकलचन्द्रसितातपवारण-
स्थगितभानुकरः पृथुवारणः ।
जय जयेति भटैः कृतसंस्तुति-
र्भवति पुण्यधनोन्यभवे जनः ॥ ९३ ॥

सदसि वेश्मनि चारुवने मह—
न्मदविलासवतीभिरुपासितः ।
वहुधनो वहुवन्धुजनोदयो
भवति पुण्यजनो जगतीदृशः ॥ ९४ ॥

उदरपूरणचिन्तनयाकुलः
परविभूतिविलोकनखिन्नधीः ।
क्षितिनिघृष्टतनुर्ज्जनवर्जितो
भवति धर्मविहीननरोधमः ॥ ९५ ॥

गृहनिवेशनमात्रविगर्हितः
स्तवदशेपजनैस्तु वहिः कृतः ।

शिशिरवातविशोषितगात्रभृ-
न्मदविमुक्तमना गुरुपापतः ॥ ९६ ॥

गमयतीत्थमृतून्सकलानिमा-
नतिशयेन महाविभवेऽनिशम् ।
मनसिजे तु यदत्र निगद्यते
तदपि साधुजनैरुपकर्ण्यताम् ॥ ९७ ॥

सुरनरेंद्रखगेन्द्रशतावृते
युधि हते हरिणा मगधाधिपे ।
सकलभारतभूमिविभुत्वम—
प्यभिगते मधुसूदनसत्तमे ॥ ९८ ॥

जलजपूरणभोग्यधिशीतिशात्
सगुणशार्ङ्गधनुःकरणादिकम् ।
कृतवतीशिनि नेमिजिने तदा
करगृहीति पराङ्मुखमानसे ॥ ९९ ॥

स्थितवति व्रतशीलगुणालये
प्रवररेवतके हतघातिनि ।
विमलकेवलबोधविलोचने
सुरकृते शरणे समवादिके ॥ १०० ॥

सकलबोधनिधिं यदुपार्थिवाः
समभिनुत्य जिनं हतकिल्विषम् ।
अथ बभूवुरमोघवचःश्रुते—
रणुगुणव्रतभूषणभूषिताः ॥ १०१ ॥

पुरवरे पुरुषः सकलोऽभव—
ञ्जिनमते निपुणोतिविशेषतः ।
जिनमहामहिमातिविपक्तधी-
र्जिनगुणस्मरणास्तमलीमसः ॥ १०२ ॥

नमितराजकपूजितशासनः
पुरि समस्तजनीनयनोत्सवः ।
जिनमताभिरतिः पुरुपुण्यतः
समभवत्सुचिरं मदनः सुखम् ॥ १०३ ॥

इति श्रीसिन्धुराजसत्कमहामहत्तमश्रीपप्पटगुरोः महासेनाचार्यस्य कृते प्रद्युम्नचरिते एकादशः सर्गः ॥ ११ ॥

# द्वादशः सर्गः ।

---

पल्लवाख्यं विहृत्याथ देशं नेमिजिनेश्वरः ।
ऊर्जयन्तं पुनः प्राप सुरासुरनमस्कृतः ॥ १ ॥
जिने तत्र समायाते शरणं समवादिकम् ।
चकार धनदो भक्त्या पाकशासनशासनात् ॥ २ ॥
स्थितं तत्र विदित्वा तं सर्वज्ञं विबुधाधिपाः ।
प्रापुर्भक्तिभरानम्रशिरस्थकरकुड्मलाः ॥ ३ ॥
श्रुत्वा समागतं नेमिं बन्धुप्रीत्या जनार्दनः ।
चचाल वन्दनायास्य दापयित्वा स घोषणाम् ॥ ४ ॥
कामपालस्तथा कामो भानुरन्येपि यादवाः ।
सत्याद्याः सर्वदेव्योपि स्ववाहस्थाः प्रतस्थिरे ॥ ५ ॥
आशाः प्रध्वनयंस्तूर्यैः प्लावयन्गजमदैर्महीम् ।
रजश्च तुरगोत्कीर्णं दिक्षु सर्वासु विक्षिपन् ॥ ६ ॥
पिबन्निवातपं विश्वमातपत्रैर्निरंतरम् ।
नष्टदृष्टा दिशः कुर्वंश्चलच्चामरवीजितैः ॥ ७ ॥
वन्दिवृन्दारकारावैः पूरयन्निखिला दिशः ।
पदातिभिर्महीं पीत्वा विमुञ्चन् प्रतिभाति वा ॥ ८ ॥
एव जगत्तृणीकुर्वंस्त्रिखण्डाधिपतिः श्रिया ।
ऊर्जयन्तं गिरिं दूरादपश्यदिति सादरम् ॥ ९ ॥
आलापमिव कुर्वन्तं मत्तकोकिलनिस्वनैः ।
फलभारनतैः भक्त्या नमंतमिव भूरुहैः ॥ १० ॥
अनारताम्बरभ्रान्त्या श्रान्ता यस्य हया रवेः ।
अवालबकुलं शृङ्गमाश्रयन्ते स निर्झरम् ॥ ११ ॥

सुवंशमुन्नतं सौम्यं वहुसत्त्वसमाकुलम् ।
अनेकपत्रसङ्कीर्णं स्वमिवाप महीधरम् ॥ १२ ॥

इत्थं सर्वैर्यदुपतिगणैरन्वितोन्तःपुरैश्च
त्यक्त्वा दूरादथ नरपतेरातपत्रादिचिन्हम् ।
भक्त्या नम्रः कतिपयनृपैर्विस्मितैस्तद्विभूत्या
प्रापज्जैनं समवशरणं यादवेन्द्रो विनीतः ॥ १३ ॥

मानस्तम्भध्वजवनसरांस्येवमादीनि दिव्या—
न्यानन्दीनि क्वचिदतिबृहन्नाट्यशाला मनोज्ञाः ।
भृङ्गारोद्यल्ललितचमरच्छत्रकुम्भाब्दपूर्वा-
ण्यष्टौ शिष्टैरभिहितमहामंगलान्यंगभाजाम् ॥ १४ ॥

सिंहेभोक्षप्रवरवसनांभोजहंसेन्दुचक्र-
भ्राजत्केकैर्भुजगरिपुणा भूपितान् केतुवर्यान् ।
त्रीन्प्राकारांश्चतुरुपवनान्युन्मदालीनशुम्भत्
स्वच्छा वापीः कमलकुमुदैर्भूपिता भूतहीनाः ॥ १५ ॥

वल्लीगेहान्मधुपनिवहैर्देवयुग्मैश्च सेव्या-
न्नानापुष्पप्रगलितरजोरञ्जिताशेषदिक्कान् ।
स्तूपान्कान्तान्ध्वजततियुतान्मन्दरत्वाद् द्वितीया-
न्सद्रम्भंकात्रजतकनकानेकसन्मंगलानि ॥ १६ ॥

एतत्सर्वान्समवशरणायुक्तसत्कान्तिगेहान्
दृष्ट्वा तुष्टा विविशुरुदितांभोजवंधूपमानम् ।
स्थानं मान्यं जिनपतिवपुर्दीप्तिनिर्धूतमोहं
कान्तं शान्तैरखिलतनुभृत्कुञ्जरैर्भाजिमानम् ॥ १७ ॥

तस्मिन्नेमिं नवविकसिताम्भोजपाण्यंघ्रिवक्त्रं
नीलाम्भोजप्रचयरुचिरं लक्षणैः शोभमानम् ।
कान्त्याधानं कमलसुरभिं स्तोतुमारेभिरे द्राक्
भक्त्या नाथं गुणगणनिधिं सम्परीत्याप्ततोपाः ॥ १८ ॥

रूपाधार प्रभुतम महाज्ञानराशे वितृष्ण
क्षान्तिश्रीधृत्यतिशयपर क्रोधमानारिघातिन् ।
गीर्वाणेशैर्यतिखगनृपैर्नूतपादाम्बुज त्वां
कुर्म्मः स्तोत्रं कथमिव वयं शक्तिहीना मुनीश ॥१९॥

इत्थं बुद्धथाप्यभवविभवोत्पत्तिवीजास्तघातिन्
स्तुत्येशानैरपि परमतध्वांतनिर्मूलनात्मन् ।
लग्नाः स्तोतुं त्रपविरहिताः स्वार्थसिद्धथै वयं किं
लज्जावन्तो जगति पुरुषा स्वार्थसिद्धिं लभन्ते ॥ २० ॥

राजीमत्या रतिसुखनिधिं प्राज्यभर्त्ताशितोपं
छित्वा भित्वा स्मरमयमहावज्रभित्तिं नितांतम् ।
प्रव्रज्यां त्वं विगलितरसां निष्ठुरां संस्तृतोऽभू
रक्तः किं वा गणयति विभो निष्ठुरं चेतरं वा ॥ २१ ॥

राहोर्वेन्द्यः क्षयविरहितो निष्कलंकोस्तदोषो
ज्योतिर्नाथो भ्रमणरहितो विप्रयुक्तेष्टकारी ।
आशामीशो जनितकुमदस्तुंगखुस्थो महात्मा
चन्द्रोऽपूर्वो भवसि जगतां त्वं जिनेन्द्रास्तपक्षः ॥२२॥

स्यान्नित्यं सत्पृथगपृथगद्वैतमित्यादितत्त्वं
स्याद्वात्युच्चैः क्षणिकमपि ते वाचि वक्ति प्रसिद्धम् ।
आप्तत्वं यज्जगति पुरुषो वीतरागोऽखिलज्ञः
स्यादेवाप्तस्तदुभयमपि ज्ञायते तस्य वाक्यात् ॥ २३ ॥

अज्ञानाब्दप्रदलनसदावायवे संशयाद्रि-
स्फूर्जद्वज्रप्रतिमवचसे भव्यसस्याम्बुदाय ।
शीलालंकृत्यधिकरुचये देवदेवाय भर्त्रे
भूयो भूयो भुवनगुरवे नेमये ते नमोस्तु ॥ २४ ॥

इत्थं स्तुत्वामलगुणगणं नेमिनाथं वरेण्यं
याच्ञां चक्रुर्वरमिममभी यादवेन्द्राः समस्ताः ।

निःशेषा किं प्रवरसुखकंजौघवृद्ध्यै दिवाक्र—
ध्या स्याद्भक्तिर्भवति भगवत्यस्तु सेवेति भूरिः ॥ २५॥

पश्चाद्भक्त्या व्रतगुणगणैर्भूषितान् शीलराशीन्
सप्तद्‌र्ध्याढ्यानखिलवरदत्तादिकान् साधुवर्यान् ।
स्तुत्वा नत्वा सकलयदुवश्चारुराजीमतीं च
स्वानन्यास्थुर्विमलमनसः कोष्ठके मानुषाणाम् ॥२६॥

एवं साधुष्वमरयुवतिष्वार्जिकाश्राविकासु
श्रीमद्भामीष्वविकलगुणज्योतिषां भामिनीषु ।
भास्वन्मूर्तिष्वधिकमहसां राशिवद्भाविनीषु
प्रोद्यद्दीतिष्वसुरभुजगाद्येषु सद्यन्तरेषु ॥ २७ ॥

ज्योतिर्देवेष्वमरनिकरेषूत्तमक्ष्माधरेषु
भ्राजन्तिर्यक्ष्वपि निजपदे दक्षिणाद्ये जिनस्य ।
भक्त्या नम्रेष्वभिमुपगतेष्वालिकारूढहस्ते-
ष्वासीनेषु प्रभुमिदमथोवाच नेमिं गणेशः ॥ २८ ॥

माङ्गल्योक्ते मदगजरिपो सर्वसत्त्वाश्रयेह
क्षोणीनाथैर्नुतपद जिन प्राणिनोऽमी समस्ताः ।
शुश्रूषन्ति स्थिरवपुरथोदारभव्यार्थमस्मा-
द्ब्रक्षि श्रेष्ठश्रवणसुखदं श्रावकेभ्यो वरेभ्यः ॥ २९ ॥

उक्तं श्रुत्वा जिनवरमुखाम्भोजतो निर्गतेत्थं
भाषा यस्मात्सकलविदुषामेष एव स्वभावः ।
यद्यद्वस्तु प्रभवति हृदि प्राणिनां या च पृच्छा
तत्संदेहप्रदलनतया द्योतितं निष्क्रियाणाम् ॥ ३० ॥

जीवाजीवाद्यखिलमनघं तत्त्वभेदं सयुक्ति
स्थित्युत्पात्तिप्रलयनिचितं सप्तभंग्योपनद्धम् ।
धर्माधर्मप्रकृतिविहितं द्योतयन्ती समन्ता-
द्व्यापिन्युच्चैस्त्रिभुवनहिता योजनक्ष्मातले सा ॥ ३१ ॥

स्यादेकात्मा द्विनयवशतो द्वित्रिभेदाच्चतुर्द्धा
नामाद्यैर्वा षडपि च तथा यत्प्रभेदाः समुक्ताः ।
सत्संख्याद्यैः किमिति नमयन्मानपूर्वैः प्रसिद्धं
त्रैकाल्यं सत्रिभुवनमभिप्रेतरूपं यथावत् ॥ ३२ ॥

जीवस्थानं गुणपदयुतं स्थानमन्यत्तु गत्या
युक्तं सद्भिः सकलभुवनस्वामिभिर्मार्गणानाम् ।
संसारं तज्जनकमपि सन्मुक्तिमस्याश्च हेतुं
चक्री शुद्धामलमदाविपद्योतिनी देहभाजाम् ॥ ३३ ॥

इत्थं सर्वं जिनवरवचः सन्निशम्याखिलार्थं
केचिज्जाता व्रतगुणमहाशीलयुक्ताश्च भक्त्या ।
अन्ये चासन् समयुतधियो देवपूजाभिरक्ताः
कामक्रोधप्रदलनतरा मन्दरागात्मरूपाः ॥ ३४ ॥

प्रस्तावेत्राभणादिति जनस्तीर्थकृच्चक्रवर्ति-
श्रीधृच्छत्रुप्रथितगुणसत्सीरिणां भूरिधाम्नाम् ।
नामायुस्तत्प्रमितगुणसंख्यान्तरं राज्यमेषां
श्रोतुं वाञ्छास्यधिप कथयेत्युक्तवान्सोपि सर्वम् ॥ ३५ ॥

कर्णाञ्जलिपुटैः पीत्वा तज्जिनेन्द्रवचोमृतम् ।
हृष्टाः सर्वे हली चैव पप्रच्छ निजवांछितम् ॥ ३६ ॥

अनाद्यं कृतकं नाथ जातस्य च ध्रुवं मृतिः ।
अतो द्वारवतीनाशो मरणं च हरेः कुतः ॥ ३७ ॥

इति पृष्टो जगौ नेमिः पुरी मद्येन हेतुना ।
साधोर्द्वीपायनादस्माद् द्वादशेब्दे विनंक्ष्यति ॥ ३८ ॥

मृगव्यसनमास्थाय कौशंववनमाश्रितात् ।
जरत्कुमारतो विष्णोर्मृतिः स्यादिषुघाततः ॥ ३९ ॥

श्रुत्वैवं सभयाः केचित्पारांतरमुपागताः ।
अन्ये वैराग्यमापन्नाः सर्वज्ञं शरणं ययुः ॥ ४० ॥

सर्वज्ञवचनं मिथ्याकर्तुं द्वीपायनो मुनिः ।
रोहिणीसहजोऽयासीद्विदेशं दृष्टिदुर्बलः ॥ ४१ ॥

नमन्नखिलसामन्तमौलिमालार्चितक्रमः ।
म्रियते यदि मत्तोपि हरिः किं साध्यमत्र मे ॥४२॥

इति मत्वा जरासूनुरपास्य विषयान् पुरीम् ।
सोदरैर्द्धार्यमाणोपि विवेश विजनं वनम् ॥ ४३ ॥

मद्यांगैर्मद्यसन्धानं त्यजतेति यदूत्तमः ।
पुर्यामदापयच्छीघ्रं तथापि पटहं भयात् ॥४४॥

प्रिया ममाङ्गजो भ्राता यदि कश्चिज्जिनोदितम् ।
तपो गृह्णाति गृह्णंतु वारयामि न निश्चितम् ॥ ४५ ॥

भाविभीत्याकुलां वीक्ष्य द्वारिकामथ भानुमान् ।
उदयश्रियं विनिन्दित्वा रक्तोप्यासीत्पराङ्मुखः ॥४६॥

हरिदुःखं तथा भावि नूनं द्रष्टुमनीश्वरः ।
अस्ताचलतटाद्भानुः पपातापरवारिधौ ॥ ४७ ॥

तमुदंतं समाकर्ण्य दुःखितेवाब्जिनी परम् ।
म्लानाम्बुजमुखारोदीत्करुणैर्मधुपस्वनैः ॥ ४८ ॥

संध्या सिन्दूरकौसुम्भकिंशुकातितिसन्निभा ।
आविरासीत्पुरोदाहं सूचयन्तीव भाविनम् ॥ ४९ ॥

परलोकमिते भानौ शकुंतार्तरवा शुचा ।
संध्या रक्ताम्बरायासीद्विनाशमिव तत्क्षणात् ॥ ५० ॥

ततस्तमोणवो दिक्षु प्रसर्पन्तो विरेजिरे ।
धूमांशा इव सम्भूतास्तद्वह्नेर्भाविनो घनाः ॥ ५१ ॥

अविवेकं निरुत्साहं मनो भ्रामयदुत्पथे ।
मोहजालोपमं जातं तमो मिथ्यावभासकम् ॥ ५२ ॥

ततस्तारगणस्पष्टः समभूत्तमसि क्षणात् ।
प्रायेणाल्पद्युतिर्भाति तमस्येव विशेषतः ॥ ५३ ॥

उन्मूलयंस्तमोजालं कुमुदं परिवर्द्धयन् ।
उदियाय निशानाथः प्रोषितस्त्रीभयंकरः ॥ ५४ ॥

कृताङ्गमण्डनो भर्तुरपराधपराङ्मुखः ।
दूतीप्रेषणकर्मादि प्रारेभे वनिताजनः ॥ ५५ ॥

संवृत्ता रतिसम्भोगे यथा च क्रमतस्तथा ।
विरक्ताः कामभोगेषु केचिदेवमचिन्तिषु ॥५६ ॥

राजराजेन या पूर्वं पाकशासनतः कृता ।
साप्यनित्या पुरी चेत्स्यार्तिक नित्यं भुवनोदरे ॥ ५७ ॥

कंसादिमत्तमातंगकेसरी यः पुराभवत् ।
हरेस्तस्य पुरः कश्चिद्वक्ष्यतीति महद्भुतम् ॥ ५८ ॥

स्वप्नेंद्रजालफेनेंदुमृगतृष्णेन्द्रचापवत् ।
सर्वेषां सम्पदस्त्यर्तजीवितं च शरीरिणाम् ॥ ५९ ॥

कायो रोगालयो नूनं भोगा देहिभयाघहाः ।
योषितो दोषगेहाभा ग्रन्थोऽनर्थकरो नृणाम् ॥ ६० ॥

मैत्री न शाश्वती भूम्यां संयोगः सविपर्ययः ।
इति ध्यात्वा जनैः कार्यं तपोवननिषेवणम् ॥६१॥

इति चिन्तयतां तेषां रागद्वेषाविवागमत् ।
परावृत्य क्षपानाथः क्षपया सह साकिवत् ॥ ६२ ॥

ततः प्रभातसंसूची ताम्रचूडस्वनैः सह ।
उदभूत्पटहस्वानः प्रबुद्धजनवल्लभः ॥ ६३ ॥

दोषा घातीद्धदीप्तिर्विमलगुणनिधिर्बोधयन्पद्मखण्डान्
पुण्यो धाम्नां निधानं हतपरमहिमा वंद्यपादो जनौघैः ।
श्रीमानस्तार्थमोहस्त्रिभुवनभवने दीप्रदीपोऽपि भानु—
र्भीतो दाहादिवोच्चैरुदयगिरिशिरो मन्दमागत्य तस्थौ॥६४।

इति श्रीसिन्धुराजसत्कमहत्तमश्रीपप्पटगुरोः पण्डितश्रीमहासेनाचार्य-
कृते प्रद्युम्नचरिते द्वादशः सर्गः ॥ १२ ॥

## त्रयोदशः सर्गः ।

श्रीमानथामरखगेन्द्रनरेन्द्रसेव्यो
नारायणो विविधरत्नविभापरीतः ।
सिंहासने कृततनुस्थितिरीड्यमानः
सामंतपौरसचिवैरनुरागवद्भिः ॥ १ ॥

गंगातरंगचयभंगुरचामराली
संवीज्यमानवपुरुन्नतमौलिशोभः ।
सत्कौस्तुभद्युतिविराजितचारुवक्षाः
पुष्पत्पयोजवदनः स्थितवान् दिनादौ ॥ २ ॥

अत्रांतरे सकलराजसुतैरुपेत:
शांतो मनाग्विषयसौख्यपराङ्मुखत्वात् ।
आस्थानमण्डपमवाप्यरथांगपाणिं
नत्वा मुदासनमलं कुरुतेस्म कामः ॥ ३ ॥

स्थित्वा क्षणं समुपलभ्य कथावसानं
स्नेहं सुदुस्त्यजमुदस्य समस्तमेव ।
अर्द्धेन्दुसन्निभललाटनिविष्टपाणि
स्तातं व्यजिज्ञपदभीतिमभिप्रयाच्य ॥ ४ ॥

स्वामिन् सुजातिकुलरूपविरोगधर्मा
भोगोपभोगसुभगत्वहितप्रबोधाः ।
लब्धा मया प्रकृतिभद्र तव प्रसादा-
त्तसाध्यते शिवसुखाय कुरु प्रसादम् ॥ ५ ॥

उक्तं निशम्य वसुदेवपुरःसरास्ते
शोकाद्बभूवुरतिनिश्चलसर्वगात्राः ।

संसाररूपमिति घोरतरं विदित्वा
मातः किमेवमबुधेव वदस्यनिन्द्ये ॥ १९ ॥
बध्नाति जन्तुरशुभास्रवहेतु कर्म
शोकेन देवि तमतस्त्यज किंच मातः ।
मोहाच्च वारयति यः सुकृते यतन्तं
शत्रुः स नूनमिति मुञ्च शुचं च मां च ॥ २० ॥
एवं सुतस्य वचनाद्विनिवृत्तमोहा
सूनुं विमुक्तविषयाभिरतिर्जगाद ।
पुत्र स्नुषां प्रति ममत्वविमोहिताहं
बोधं त्वयाद्य गमिता विदिताखिलार्थ ॥ २१ ॥
वातावढौकितविशुष्कदलोत्कराभो
योगो जनैर्जलदसंहति वह्निभूतिः ।
मायोपमा रतिरवश्यविनाशिनी च
दुःखं सुखं मतमहो विषयातुरैच्छैः ॥ २२ ॥
सारश्च कश्चिदिह चेद्विषयेषु पुत्र
नाभेयपूर्वकनृपाः किमु तांस्त्यजेयुः ।
नित्या च सङ्गतिरपीष्टजनैर्यदि स्या-
द्ब्रह्मादयस्तपसि किं निरता भवेयुः ॥ २३ ॥
तस्मात्कुरुष्व मतमङ्गज सम्भ्रमेण
नो वारयामि नियमादहमप्यशङ्कः ।
स्नेहं विधूय ममतां च तपः करिष्ये
संसारसागरसमुत्तरणैकसेतुम् ॥ २४ ॥
इत्यादि मातृवचनं स निशम्य हृष्यन्
शुद्धान्तमेत्य च विरक्तमना जगाद ।
सत्यं शृणुष्व तनुमानिह जन्मवार्द्धौ
भ्राम्यत्कथंचिदुपयाति सुमानुषत्वम् ॥ २५ ॥

प्राप्यापि तत्कृतमिदं क्रियते मयैत-
त्कारिष्यते पुनरतोपि परं ततश्च ।
इत्यादिकार्यकरणाकुलधीर्मनुष्यो
मृत्युं प्रयाति विषयैर्विवशीकृतात्मा ॥ २६ ॥

रक्तापगाहतमतङ्गजवाजिदुर्गं
किन्नो विशन्ति रणमर्थलवैकलुब्धाः ।
व्याघ्रादिसिंहवृकभीमवनेचराढ्यं
विन्ध्यादिपर्वतमहाविपिनं च केचित् ॥ २७ ॥

उत्तुंगभंगुरतरंगविभीममुच्चैः
पाठीनलोठनविलोठितसर्वसत्त्वम् ।
स्वल्पैकयोषिदुपभोगकृते विभीमं
रत्नाकरं किमु विशन्ति न मूढमर्त्याः ॥ २८ ॥

किं भाषितेन बहुना जगतीह यद्य-
त्कर्माखिलं जनतया क्रियतेऽङ्गियाति ।
तत्सर्वमेव युवतिप्रतिबद्धभोग-
लब्ध्यै सदेति परिचिन्तयतास्तमोहाः ॥ २९ ॥

इत्यादि वाक्यमहितप्रतिघाति दिव्यं
श्रुत्वा जगाद रतिपूर्ववधूसमूहः ।
संसारपर्यटनभीतमतिः प्रमुक्त-
शोको मनाक्प्रणतमौलिनिविष्टहस्तः ॥ ३० ॥

स्वामिंस्त्वमेव शरणं गतिराश्रयस्त्वं
मित्रं त्वमेव हितकृत्त्वमसीह बन्धुः ।
अस्मभ्यमन्यजननेपि भवत्प्रसादा-
न्नान्यो जिनेन्द्रवचनाच्च समाश्रयोस्ति ॥ ३१ ॥

यद्यत्र गेहरतधीः क्षितिपाल भोगं
भुंक्षे तदा वयमपि ध्रुवमेवमेनम् ।

# चतुर्दशः सर्गः ।

श्रियं धरन्तं तपसां महीयसीं
महीधरा विष्णुहलायुधादयः ।
सशोकवक्त्राः प्रणिपत्य मन्मथं
तदर्पितान्तःकरणाः पुरं ययुः ॥ १ ॥

इतोपि कामो मुनिरन्यदुष्करं
तपो विचित्रं विनयोद्यतो महान् ।
विबोधदिग्वृत्तिविशेषलब्धिमां-
श्चकार सर्वैरभिवाञ्छ्यमीदृशम् ॥ २ ॥

चतुर्थषष्ठाष्टमपक्षमास—
त्रिमासपूर्वानुपवासकान्बहून् ।
विधाय कर्मान्तमतिर्विधीन् शुभान्
मुदं स चक्रे सकलस्य निस्पृहः ॥ ३ ॥

नृणां प्रसिद्धाः कवलाः किलागमे
द्विकाधिकास्त्रिंशदतः क्रमात्पुनः ।
प्रहाणिमीशः कृतवाननेकशः
समाचरन्नूनतरोदरं तपः ॥ ४ ॥

अनेकभेदां जिनमार्गदेशितां
सुभावनां वृत्तिपदादिसंख्यताम् ।
विशोषणीं कायपुराकृतैनसां
प्रवृद्धिमीशो विदधौ विशेषतः ॥ ५ ॥

गुडं दधिक्षीरघृतादिशर्करां
तथा हि तैलं लवणं विमुच्य सः ।

विरक्ततत्कांक्षमतिस्तपः शुभं
शुभाश्रयापादि निराकुलं व्यधात् ॥ ६ ॥

वधूपशुक्षुद्रमृगादिवर्ज्जिते
गतासुके ध्यानसुभावनावहे।
शुभान्तरात्मा कृतवान्मुनीश्वरो
विविक्तशय्यासनलक्षणं तपः ॥ ७ ॥

पयोदकाले तरुमूलयोगी
हिमागमे प्रावृतगात्रयष्टिः।
शिलातपं ग्रीष्मदिने प्रसोढा
जनस्य सम्पादितवान्सुबुद्धिम् ॥ ८ ॥

मनोवचःकायकृतादिभेदकं
प्रमादतः किञ्चिदुपागतं क्षणात्।
जिनेन्द्रसिद्धोत्तमसूरिसाधुषु
यथार्हमायोजितवाञ्जितश्रमः ॥ ९ ॥

प्रवीणबुद्धिर्विनयं नयालयः
दुरीहितं शोधयिताकरोत्तपः।
तथान्तरंगं प्रथमं यमोद्यमं
सुबोधदृग्वृत्ततपःसुभक्तिमान् ॥ १० ॥

दशप्रकारेष्वथ सूरिपूर्वके-
ष्वनारतं व्यावृतिकर्मनिर्मलम्।
चकार स प्राशुकवस्तुभिः क्षमी
क्षमादमप्राणिदयाविघाततः ॥ ११ ॥

जिनेन्द्रवक्त्राम्बुजनिर्गतं श्रुतं
सदङ्गपूर्वादिकमस्ततन्द्रितः।
पञ्चाक्षरव्यञ्जनघोषबुद्धियु-
क्तपोकरोत्स्वाध्ययनाख्यमुत्तमम् ॥ १२ ॥

विमुक्तकुध्यानयुगोऽतिशुद्धधीः
प्रसिद्धधर्म्यः प्रवरोरुशौक्ल्यकम् ।
समाश्रितो ध्यानयुगं महाफलं
सदापि निर्व्याकुलधामवासनः ॥ १३ ॥

अबाह्यबाह्यात्मकसंगवर्जितो
विमुक्तकायादरसंस्कृतिस्पृहः ।
व्युदादिसर्गाख्यमतीव पावनं
तपो महात्मा विदधे मनोभवः ॥ १४ ॥

तथा जनाक्रोशनताडनोत्पथ-
प्रभाषणानादरभर्त्सनादिभिः ।
अचालितान्तःकरणो विवेकतः
सदोत्तमाक्षान्तिमशिश्रियत्प्रभुः ॥ १५ ॥

स्थितौ प्रयाणे वचने निरीक्षणे
भुजिक्रियायां शयने विमर्शने ।
प्रचेष्टने मार्द्दवमुत्तमं वह—
न्प्रशान्तमूर्तिः सुतरामशोभत ॥ १६ ॥

मनोवचःकायविचेष्टितेषु यो
विविक्तवृत्तिं विमलां विचारयन् ।
प्रकृष्टमेवार्जवमार्यसंस्तुतं
सुवीर्यधुर्यो वहतिस्म सन्ततम् ॥ १७ ॥

सुशौचसत्संयमपूर्वलक्षणं
तथापरं चापि दशप्रकारम् ।
नितान्तमुत्तुङ्गगुणो वहन्मुनि—
र्जिनेन्द्रधर्मं जितलोभमानकः ॥ १८ ॥

जितान्यलोकान्विषमान्परीषहां-
स्तपोभिवाञ्छामतिमूलतोघ्नतः ।

क्षुदादिकान् निर्जितवांन्छलार्थिनः
पुरो यथारीन्मदनो महामुनिः ॥ १९ ॥

विचित्रपुष्पोत्करवस्त्रशोभिते
कृतोपधाने शयने ह्यशेत यः ।
स एव साधुस्तृणशर्करोपल-
स्थलीशिलास्पर्शसहः प्रशिश्यके[1] ॥ २० ॥

सितातपत्रप्रतिवारितातपो
जलार्द्रसच्चन्दनपंकितश्च यः ।
पुरा स पश्चाद्गिरिमस्तके रवेः
करान्सहिष्णुः स्थितवान्मलावृतः ॥ २१ ॥

सदन्नपानोत्तमखाद्यषड्रसान्
प्रसाधितान्स्वादरसानभुंक्त यः ।
महोपवासग्लपितांगयष्टिकः
स भुक्तवान्क्षौद्रवतैलमप्यहो ॥ २२ ॥

श्रियं विमुच्याश्रितवांस्तपोवनं
भुवोधिपः प्राक्प्रणतावनीश्वरः ।
स एव मौनी प्रणतामराधिपं
धिनोति चित्तं महतां विचेष्टितम् ॥ २३ ॥

नरेन्द्रविद्याधरदेहजा वधूः
प्रहाय मुक्तिं यतमानसत्तमः ।
क्षमादयाबुद्धिसुशान्तिमैत्रिकाः
क्षणं स नो संत्यजतीति विस्मयः ॥ २४ ॥

परिग्रहद्वेषजिताशयोज्झितः
क्षितीशिनां सच्चतुरंगकोपि यः ।

---

१ प्रशिश्ये, अत्र स्वार्थे कः प्रसुप्त इत्यर्थः ।

गृहीतवान् द्वादशभेदमंगक—
मनंगचेष्टावगतिः कुतो नृणाम् ॥ २५ ॥

प्रगीतनृत्योद्यतयोषिदावृतो
निषेवते यः सकलान्नृपान्पुरा ।
स चाधुना भीमवनेऽत्र योगभृत्
धृतिं वहंस्तैरुपसेव्यते यतिः ॥ २६ ॥

रथाश्वनागेन्द्रपदातिवेष्टितः
स्वलीलया यो भ्रमतिस्म यानकैः ।
युगान्तदृष्टिः स्वसमाहितात्मकः
स एव मार्गे समितः प्रचेष्टते ॥ २७ ॥

विदग्धयोषित्सरसोत्कटं पुरा
प्रभाषते यः प्रणयान्नृपादिकम् ।
श्रुतानुपूर्व्या प्रियमिष्टदेशकं
मितं मुनिः संवदतिस्म कारणे ॥ २८ ॥

अनेकपात्रादिषु लीलया पुरा
सुतानुजाद्यैः सह यात्ति भूपतिः ।
स एव मुक्ताखिलपिण्डदोषकं
त्रिदण्डशुद्धोत्ति तनुस्थितीच्छया ॥ २९ ॥

कुमारकैर्मुग्धविकारिचञ्चलैः
प्रधावनोद्वल्गनचेष्टयारमत् ।
पुरा स यो यत्नयुतोऽभवत्पुनः
स्वकाङ्गनिक्षेपपुरःसरादिषु ॥ ३० ॥

पुरेंगितज्ञैः परिढौकिते मलं
पतद्गृहादौ व्यमृजच्छरीरजम् ।
गतासुके दूरतरे जनोज्झिते
विमुञ्चति प्राज्यमुनीश्वरोङ्गजः ॥ ३१ ॥

मदान्धवैरी मुनिसूदनः पुरा
नृपोत्तमो यः सकलारिदर्पमुट् ।
स एव षड्जीवनिकायरक्षको
बभूव कायादिविदादराद्विभुः ॥ ३२ ॥

नरेन्द्रधर्माश्रयणान्महारिपु
प्रवृत्तवान्योऽनृतवाक्तया क्वचित् ।
स सत्यमेवोज्झितरागदोषको
भणत्यसत्यप्रतिघातिशक्तिमान् ॥ ३३ ॥

पुरांगनास्वर्णगजादितोषको
बलादभूद्यो नृपतिर्महोद्यमः ।
परस्वमल्पतृणमात्रमप्यसौ
न लाति रामानुजसूनुसुव्रतः ॥३४ ॥

वराङ्गनाभिर्बहुभिर्मनोहरं
यथेष्टमाक्रीडति यः सदा विभुः ।
मुनीश्वरः सन्मनसापि तन्मुखं
न चिन्तयत्येष वधूमनोहरन् ॥ ३५ ॥

मणिप्रवालाश्वगजोरुपत्तिस—
द्गृहादिभूयांसपरिग्रहग्रही ।
स एव कामो मुनितामुपाश्रितो
बभूव देहेपि निवृत्तलोभधीः ॥ ३६ ॥

त्रिगुप्तिगुप्तः समितश्च पञ्चके
प्रसन्नगम्भीरमनोहरक्रियः ।
अनेन मार्गेण दधत्तपोधनं
तपोधनो ऽभूद्यशसां महालयः ॥ ३७ ॥

अथान्यदैवं दशकेऽब्दके मुनिः
समाधियोग्यं वनखण्डमाप सः ।

विशुद्धधी रैवतकं पुरैव यो
निरस्तदग्घातिमहारिपुर्बली ॥ ३८ ॥

समे शुभे जंतुविवर्जितेऽमले
शिलातले तत्र वनेऽवनिक्षमः ।
लसन्सुपर्यंकनिरुद्धमानसो
मनाग्मनागुच्छ्वसनेतरे त्यजन् ॥ ३९ ॥

विमुच्य रौद्रं नरकस्य कारणं
तथार्तमप्यन्यगतेर्निमित्तकम् ।
स्थिरं विधायात्ममनः पुनः पुनः
स धर्मसद्ध्यानबलेन भूयसा ॥ ४० ॥

ततः क्रमात्कर्मविशुद्धयोगतो
गुणात्प्रमत्तादितराच्च निर्गतः ।
निरुद्ध्य चित्तं निरवद्यमंगज—
स्तदोपरिष्टादधिरोढुमुद्यतः ॥ ४१ ॥

अपूर्वसंज्ञं समतीत्य च क्रमा—
दवाप्य धीमाननिवृत्तिसंज्ञकम् ।
व्यधात्क्षयं षोडशकर्मणां क्षणा—
न्महानमीषां प्रथमं तदर्द्धके ॥ ४२ ॥

निद्रानिद्रात्रिकस्यातपनरकयुगस्याथ तिर्यग्युगस्य
प्रोद्योतांत्यान्यजातिप्रचुरतनुभृदुत्तापिसाधारणस्य ।
सूक्ष्मत्वस्थावरस्य क्षयमथ युगपदग्रसंख्यानकानां
प्रत्याख्यानेतराणां प्रथितमुनिवरो नीचवेदद्वयस्य ॥ ४३ ॥

हास्यादीनां हि षण्णां तदनु पुरुषवेदस्य निर्मूलतोऽसौ
क्रोधादीनां त्रयाणां क्षयमिति विदधे सोऽनु संज्वालकानाम् ।
लोभं संज्वालनाख्यं विमलगुणनिधिः सूक्ष्मसत्संपराये
हत्वा निःशेषघातिक्षयमिति विदधे द्वादशे स्थानवर्ये ॥ ४४ ॥

तावत्संजातमस्य क्रमकरणरहोहीनमाद्यन्तमुक्तं
लोकालोकावलोकि प्रलयविरहितं व्यापिदृग्ज्ञानयुग्मम् ।
वीर्यं चामेयमित्थं सुखमपि करणातीतमात्मोत्थमेव
छत्रं भद्रासनं सच्चमरयुगमभूद्देवनिर्मापितं द्राक् ॥ ४५ ॥

दैत्या नागाः सुवर्णप्रभृतिभवनवास्युत्तमाः किन्नराद्या
भौमा ज्योतिष्कवर्ज्यास्त्रिदिवपतिवरा शक्रपूर्वाः समस्ताः ।
खेटाः क्ष्मेशाः सतोपा यदुकुलपतयो विष्णुसीर्यादिभव्याः
शंवाद्याश्चारुलीला मृदुललितवयोवेपयुक्ताः सुभक्ताः ॥ ४६ ॥

नानापुष्पैः सुधूपैः सुरभिपरिमलैरक्षतैर्गन्धदीपैः
स्तोत्रैर्नृत्यप्रगीतैरुरुजयनिनदैर्वंशवीणामृदङ्गैः ।
यातैर्नानाप्रकारैरतिशयगमनैरेत्य पूजां विचित्रां
कृत्वा स्तुत्वा प्रणामं प्रविदितमहसश्चक्रुरीशस्य तस्य ॥ ४७ ॥

भक्त्या स्थित्वाग्रतोऽमी प्रशमनभवसंघातजातस्य वाक्यं
पृष्ट्वा श्रुत्वा गृहीत्वा हितमतुलमगुः स्थानमात्मीयमाशु ।
ईशोपीशेन साकं मदनमुनिवरो नेमिना लब्धबोधो
यातः श्रीमान्विहर्तुं विबुधगणनुतः पल्लवाख्यं सुदेशम् ॥ ४८ ॥

आर्या या रुक्मिणी सा विमलगुणगणालंकृता सस्नुपातो
भूत्वा चैकादशाङ्गश्रुतजलधिमहापारगापारशीला ।
राजीमत्या ससत्या विपयमभिहितं भीमसंसारभीता
याता नाथेन भूत्यालयगमनमहाशोभिना नेमिनामा ॥ ४९ ॥

एवं गच्छत्सु वर्षेष्ववधिमपगतं मन्यमानो दिदृक्षु-
र्द्वारां द्वीपायनोसौ जिनवरकथिते द्वादशेब्दे कदाचित् ।
प्राप्यास्थाद्योगधारी रविकिरणसहो ग्रीष्मकाले शिलायां
पुर्या बाह्ये समीपे प्रकटयितुमनाः स्वं तपो यादवानाम् ॥ ५० ॥

तावत्क्रीडाभिसक्ता यदुपतितनयाः शंवसत्यासुताद्याः
पीत्वा प्राक् त्यक्तमद्यं जलमिति मुदलोलांगकास्तं प्रदेशम् ।

प्राप्ता रक्ताक्षिवक्त्राः शिथिलसुवसना व्याकुलोल्लोलिकेशा
गायन्तो सत्यगीतं वनकुसुमभृतो यत्र तस्थौ मुनीशः ॥५१॥

दृष्ट्वात्यन्तं कृशाङ्गं कथमपि चिरतस्तं प्रबुध्यातिबाल्या-
त्कृत्वा भीमोपसर्गं परुषवचनिनो लोष्टभिस्ताडयित्वा ।
भूमावापात्य रोषाद्भ्रुकुटिविषरुडुज्ज्वाल्य मेतं विधाय
प्राप्यावेद्यात्मपित्रे श्रवणप्रतिपदांभोजभक्ताः कुमाराः ॥ ५२ ॥

निःसृत्यारिष्टनेमेर्वयमिति विमदास्त्यक्तनिःशेषभूषाः
शंबप्रद्युम्नसूनुप्रवरगुणसुभान्वादिवीराः समस्ताः ।
दीक्षां दैगम्बरीं ते स्वयमतिपटवः संसृता पञ्चमुष्टि-
प्रोत्खातस्निग्धनीलप्रकुटिलरुचिरोल्लासिकेशाः क्षणेन ॥५३॥

द्वारावत्याविनाशो हरिमरणमथो सीरिशोकादिवृत्तं
ज्ञेयं श्रीमज्जिनोक्तात्सकलमपि मयाऽप्रस्तुतत्वान्न चोक्तम् ।
शंबस्याचार्यवीर्यप्रविदितसमयस्याङ्गजेनाप्तिवेगा-
द्युक्तस्तस्याङ्गजस्य क्षितितलविदितस्योच्यते सत्तपोऽतः ॥५४॥

नानाभेदं परेषामतिविषममपोह्यार्त्तरौद्रं महात्मा
ध्यायन्धर्म्यं च शुक्लं क्षपितमदरिपुः क्षुत्पिपासाद्यजेयः ।
चक्रे विस्मेरवक्त्रैर्नरयुवतिजनैः कौतुकाद्वीक्ष्यमाणो
बाह्याबाह्यादिभेदं निरुपमगुणनिधिर्भूरिशीलस्तपोऽसौ ॥ ५५ ॥

यत्रार्कोऽस्तं प्रयाति प्रभवति विषमे कानने मान्यतेजा-
स्तत्रैवास्ते क्रियात्मा वसुभूतिभगवांस्थण्डिले चण्डदीप्तिः ।
हेमन्ते बाह्यभूमौ ग्लपिततरुगणे प्रावृताङ्गः स शेते
प्रावृष्यम्भोदवृन्दस्थगितदिशि च क्ष्मारुहां चारुमूले ॥ ५६ ॥

मुक्तारत्नावलीसन्मृगपतिपरिनिःक्रीडिताख्यं त्रिलोक-
ख्यातं तत्सारमत्रान्यमुरजनिभमभून्मध्यमस्यैव चारु ।

---

१ अयं द्वाविंशत्यक्षरात्मकः पादः, छन्दस्त्वेकविंशत्यक्षरात्मकः ।

सर्वेसाद्भद्ररूपं प्रविदितमथ तद्भद्रमित्यादि सर्वं
कुर्वन्शंवोथ नीत्वाश्रितहितगदिता द्वादश द्वौ च वर्षान् ॥५७॥

देशं कालं विशिष्टं परिणतिमपि संप्राप्य पर्यङ्कयोगी
भूत्वा भूतात्मचेष्टास्तत उपरि महाध्यानशस्त्रास्तघाती ।
पूज्यो भ्रातृव्ययुक्तो नरसुरदितिजैर्ज्ञानदृग्वीर्यसौख्यं
स्थानत्वं प्रापदीशो विकसितविमलांभोजवक्त्रः कृतार्थः ॥५८॥

हत्वा मोहान्धकारं जनहृदयगतं नेमिनाथस्त्रिलोक्यां
प्रोच्योत्तुंगं सुधर्मं त्रिदिवशिवपदप्राप्तिहेतुं श्रितेभ्यः ।
श्रीमान्प्राप्योर्जयन्तं सुरगणनरपैः स्तूयमानांघ्रियुग्मः
सिद्धिं शुद्धस्वरूपस्थितिमुपगतवान् ध्वस्तनिःशेषकर्मा ॥५९॥

छद्मस्थानेहसोनत्रिंशत्परिमितान्वत्सरान्संविहृत्य
क्ष्मायां भूयो हितपथनिरतान्भव्यबन्धून्विहाय ।
कामः शंवोऽनिरुद्धास्त्रिभुवनशिखरस्थानमेते त्रयस्ते
व्योमस्पर्शि प्रसिद्धं मुनिवरवृषभास्तूर्जयन्तं महान्तम् ॥ ६०॥

प्राप्यारुह्यास्य शृङ्गं त्रय इति विषमं सून्नतं मान्यमीशाः
कृत्वा घातिक्षयं द्राक् स्थिरपदममलं प्रापुरात्मीयरूपम् ।
देवाः सेन्द्रास्ततस्तानतिशयविभवाः प्राप्य भक्त्या महत्या
प्रार्च्य स्तुत्वा प्रजग्मुः स्वयमपि शिवताप्रार्थिनो भूरिशोभाः॥ ६१

येषां क्षुत्तृड्विमोहप्रतिभयमदमात्सर्यरोगाद्विडाप्त-
क्लेशप्रद्वेषरागक्षयविपदुदया मूलतो नाशमीयुः ।
ये दृग्ज्ञानोरुवीर्यप्रवरसुखनिराबाधतासूक्ष्मतादीन्
प्राप्ताः प्रद्युम्नपूर्वाः शिवमजितयशो नो द्रुतं ते दिशन्तु ॥६२॥

येषां वर्णो न गन्धो रसगुरुलघुता स्पर्शशब्दादयो न
प्रध्वंसार्तिज्वरेच्छा भवमरणजरातङ्कगत्यादयो वा ।
यैर्निर्मूलेन धीरैर्बहुविधरिपवो युद्धनिर्नाशितास्ते
सिद्धाः सम्बुद्धबोध्या बुधसमितिनुताः पांतु पापान्नतान्नः ॥६३॥

येनाशेषखगेन्द्रभूपविलसल्लक्ष्मीश्चिरं पालिता
यः प्रज्ञप्तिपुरस्सराद्भिरभवल्लब्ध्वाग्र्यलंभो महान् ।
राज्यं प्राज्यगुणं विहाय तपसा मोक्षश्च येन श्रितः
कामः काम्यसुखं प्रकाममधिपो देयात्सदा वः स्थिरम् ॥ ६४॥

लीलाशीलालयो यो यदुकुलजनताल्हादिचेष्टोऽतिभोगी
भूत्वा त्यक्त्वा समस्तं कतिपयदिवसैर्लब्धबोधो हि भूत्वा ।
ज्ञात्वा दृष्ट्वा गदित्वा त्रिभुवनविहितां प्राप्य पूजां प्रपूज्यां
शंवः शं वो ददातु क्षरणविरहितं स्थानमाप्य स्थितोऽसौ ॥ ६५॥

राज्यं प्राज्यमुदस्य निर्ममतमं तप्त्वा तपो दुश्चरं
ध्यानाग्नौ सकला विकर्मसमिधो हुत्वाप यः केवलम् ।
यावज्ज्ञेयविसर्पि विश्वकरणग्रामातिगं निश्चलं
देयाद्वः पदमव्ययं स भगवान्सार्वोऽनिरुद्धो विभुः ॥ ६६ ॥

इति श्रीसिन्धुराजसत्कमहामहत्तमश्रीपप्पटगुरोः महासेनाचार्य—
कृते प्रद्युम्नचरिते चतुर्दशः सर्गः ॥ १४ ॥

## माणिकचंद-दिगम्बर जैन-ग्रंथमालासमिति।

### ( प्रबन्धकारिणी सभाके सभ्य । )



१ रायबहादुर सेठ स्वरूपचन्द हुकुमचन्द ।

२ " " तिलोकचन्द कल्याणमल ।

३ " " ओंकारजी कस्तूरचन्द ।

४ सेठ गुरुमुखराय सुखानंद ।

५ " हीराचंद नेमिचंद आ० मजिस्ट्रेट ।

६ मि० लल्लूभाई प्रेमानंद परीख एल. सी. ई. ।

७ सेठ ठाकुरदास भगवानदास जौंहरी ।

८ ब्रह्मचारी शीतलप्रसादजी ।

९ पं० धन्नालालजी काशलीवाल ।

१० पं० खूबचंदजी शास्त्री ।

११ नाथूराम प्रेमी ( मंत्री ) ।

